येण स्त्रीत्व विवचायां सिनोत्यात्मानं सम्बध्नाति पचाद्यच् (३ । १ । १३४) टाब्विषयः । स चासौ भयं चेति स तथा, उभौ साभ्यासस्येति (८ । ४ । २१) निर्देशा नित्यद्विवचान्त एव स्त्रीत्वे टाबन्तादपि द्विवचनमिति बोधयितुम् । तत्र नित्यपदं तस्य सर्व्वनामसंज्ञया सर्व्वनाम्नस्तृतीया चेति (२ । ३ । २७) तृतीया षष्ठ्योः प्रकच् प्रत्ययोऽपि । उभादुदात्तो नित्यमिति (५ । २ । ४४) तु स्वरूपपरो नार्थपरः । अतएव उभ शब्द इति शब्द-पदम् । "शास्त्रेशब्दस्तु वाचकः" इत्यभिधानात् । 'उभयो-न्यत्रेति' । तस्य उभयस्मै उभयस्मात् इत्यादि, उभयः उभयौ उभये उभया: उभय उभयौ उभयान् उभयेन उभयाभ्यां उभयैः उभयस्मै इत्यादि, उभावयवावस्य उभयः । डतर-डतमौ प्रत्ययौ । किं यत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् (५ । ३ । ९२) वा बहूनां जातिपरिप्रश्ने डतमच् (५ । ३ । ९३) । तदन्तस्य संज्ञा । कतरस्मै कतमस्मै । 'अन्यपर्य्याय' इति । (इतरान्यतरयो र्व्विशेषणं) * तादन्तस्य तृतीया-षष्ठ्या अकच्च फलम् । नेम शब्दार्थमाह, 'अर्द्धपर्य्याय' इति । सम-सिमौ सर्व्वार्थौ अन्योन्यसाहचर्य्यात् । तेन यथासंख्यमनुदेशः समानां (१ । ३ । १०) समे देशे यजत इत्यादौ न संज्ञा । अत्र समानामिति तुल्यानां समे निम्नोन्नतत्वादि-दोषरहित इत्यर्थः ।

---

* तत्नीर्व्विशेषण (ट)।

अत्र पूर्व्वादीनि निर्व्विशेषणानि क्वचिद्गणपाठे दृश्यन्ते। तत्तु हेयमेव। पूर्व्वपरेति (१। १। ३४) सूत्रे व्यवस्थाया-मिति किमित्युक्ता यदुच्यति दक्षिणाग्राया इति तत्र तेन विकल्पाभावे श्यनेन गणपाठेन या नित्या संज्ञा प्राप्नोति सा कथं न स्यात्? तथा दिह गणेपि पूर्व्वादीनि वक्ष्यमाण सूत्र-रीत्यैव पठितव्यानि। अथाह्नन्तौ च तथैव सन्तोति सकलं चाव। भवत् शब्दउगित्। सर्व्वनामानोति तुम्भादे (८। ४। १८) राक्षति गणत्वात् मूर्द्धापदात् संज्ञायामग (८। ४। ३) इति न णत्वम्। अतएव वा निर्द्दिश्य शदनित्यमिति। तेन श्रीनाथ रघुनाथ-रघुनन्दनादयो णत्वाभावात् सिद्धाः। अत्र सर्व्वेषा नामित्यन्वर्थसंज्ञा ग्रहणात् सर्व्वोनाम कश्चित्। तस्मै सर्व्वा-येत्यत्र न भवति। अत्र तदन्तविधे राश्रयणात् परमसर्व्वस्मै इत्यपि भवति, तत्र तृतीया समास (१। १। ३०) इति निषेधाज्ज्ञापकात्। तर्हि सर्व्वमतिक्रान्तोऽतिसर्व्वस्तस्मै अति सर्व्वायेति। अत्र कथं नभवति? नह्येतदन्वर्थसंज्ञया निर-सितुं शक्यं, सर्व्वशब्दस्य स्वार्थहानित्वात्। उच्यते, प्रधानाप्रधान-न्यायादप्रधानेषु न संज्ञा। तेन अतिसर्व्वायेति सुस्थम्। अतएव संज्ञोपसर्ज्जनोभूताः पाठादेव विवर्जिता इति, तर्हि किं न बहुव्रीहावि (१। १। २९) त्यनेन? सत्य, तत्र वक्ष्यति।

## विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥

दिग्बहुव्रीहौ सर्व्वनाम-संज्ञा वा स्यात्। उत्तरपूर्व्वस्यै। उत्तरपूर्व्वायै।

'दि'। दिगुपलक्षितः समासः दिक्समासः। तथाच पूर्व्वसर्व्वकप्रिय इत्यत्र दिक्पूर्व्वपदे उत्तरपदे परे तत्पुरुषेऽपि विकल्पः स्यादिति बहुव्रीहिग्रहणम्। ततश्च दिङ्नामान्यन्तराले (२।२।२६) इति प्रतिपदोक्तो बहुव्रीहिर्गृह्यते। अथवान्यथा व्याख्यातविभाषेयम्। समासग्रहणात् आबाधे चेति (८।१।१०) द्विर्व्वचने दक्षिणदक्षिणस्यै गतेति बहुव्रीहिवद्भावाति-देशेतु नित्यैव संज्ञेति वृत्तौ समासग्रहणाभावे प्रतिपदोक्तस्य ग्रहणं न स्यात्।

न बहुव्रीहौ ॥ २९ ॥

बहुव्रीहौ संज्ञेयं नास्ति। प्रियविश्वाय देहि। स्मै भावो नास्ति। त्वत्कपितृको, मत्कपितृकः। कुत्साद्यर्थे प्राक्टेरकज् (५।३।७१) न भवति। प्रागिवात् कएव (५।३।७०) भवति॥

'न'। "प्रधानाप्रधानयोः प्रधाने कार्य्य-संप्रत्ययः" इति

प्रियविश्वायेत्यादौ स्मैयादादयो न भवन्त्येव। किन्तु त्वं कुत्सितः पिता यस्येति वाक्ये अन्तरङ्गत्वात् प्रथम मेवाकच् प्राप्नोति । ततश्च त्वकत्' पितृक इति भवेत्। त्वत्कपितृक इति नस्यात्। यथार्थं प्रयोगो भवति तदर्थमिदम्। सति त्वत्र सूत्रे पनेनैव सध्य सेत्स्यतीति। प्रियविश्वायेत्यत्र स्मैभावो न भवतीत्यपि दर्शितम्। "एकेनैवद्वयमुत्तीर्णं" मितिन्यायात्। एवं त्वर्थादापततिं वङ्गोऽवशित् सूत्र-सामर्थ्या दन्तरङ्गोऽकच् न भवति। कुत्सितं त्वा मतिक्रान्तेनेति विवक्षायान्तु पतित्वकयेत्यादि स्यादेव। त्वा मतिक्रान्तेन कुत्सितेनेति विवक्षायां कवेव पतित्वकेनेति। तदुक्तं कातन्त्रवररुचि-वृत्तौ — "यत् सर्व्वनाम-मान्नातु कार्य्यं प्राधान्य एवतत्। तदपियन्तरङ्गत्वा दङ्गोऽपि विना क्वचित्" इति। प्रियविश्वायेति सर्व्वनामसंख्ययो रुपसंख्यान (२। २। ३५ वा) मित्यपिनास्ति पसर्व्वनामत्वा दतो वा प्रियस्येति (२। २। ३५ वा) प्रियशब्दस्य वा पूर्व्वनिपातः। त्वत्कपितृक इत्यत्र विशेषणत्वात् युष्मदः पूर्व्वं निपातः।

## तृतीया-समासे ॥ ३० ॥

अत्र संज्ञेयं नास्ति। मासपूर्व्वाय देहि। पुनः समासग्रहणात् वाक्येऽपि, मासेन पूर्व्वाय।

'वृत्ती'। पूर्व्व सदृशेत्यनेन (२। १। ३१) यः प्रतिपदोक्तः

समासः सएव गृह्यते । द्वन्द्वेचेति चकारस्य समुच्चयार्थत्वा द्वाक्येऽपि तद्विषय एव न भवतीत्युदाहरति । (मासपूर्व्वायेति) मासेन पूर्व्वायेति । कर्त्तृकरणे कृतेति (२ । १ । ३२) सामान्यलक्षणेन समासे वाक्येच त्वकत् कृतं त्वकया कृत मिति स्यादेव । ( दिक्समासे (१ । १ । २८) इत्यतः समासग्रहणानुवृत्ते: पुनः समासग्रहणाद्गौणसमासेऽपि । गौणत्वन्तु यस्मिन् यदर्थात् तस्मिन्नपि नाच्छब्दंं भवतीति केचित् । )

द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे संज्ञेयं नास्ति । पूर्व्वापराणाम् । कतरकतमानाम् ।

विभाषा जसि ॥ ३२ ॥

द्वन्द्वे जसि सा संज्ञा वा स्यात् । कतरकतमे, कतर कतमाः ।

'वि'। द्वन्द्वे जसि वा स्यादिति द्वन्द्वसाहचर्य्यात् जसीत्यपि विषयसप्तमी । तथाच जस्विषयकं कार्य्यं शी-विधानमेव विकल्प्यते *। चकारस्तु द्वन्द्वेचेति (१ । १ । ३१) नित्य

* नाकार्च्चकारस्य पुन द्वंन्द्वेचेति नित्य निषेधात् (ठ)। चकारस्तु द्वन्द्वेचेति निषेधात् ('च')।

निषेधात्। कतरकतमा इत्येव भवतीति वृत्तिः *। अतः कतरकतमे इति वत् कतरकतमके इति न भवतीति † व्यवस्थित विभाषात्वात् जस् कार्य्यं प्रति संज्ञाविकल्पः। अथवा कार्य्य-शब्दाध्याहारात् जसाधार कार्य्ये शीभावे संज्ञाविकल्प इति केचिदाहुः।

प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ॥ ३३ ॥

एते जसि सर्व्वनामानि वा स्युः। प्रथमे, प्रथमाः। चरमे, चरमाः। तयप्। द्वितये, द्वितयाः। द्वये, द्वयाः। अल्पे, अल्पाः, इत्यादि।

'प्रथम'। अत्रापि तथाविधानात् तथैव विकल्प इति प्रथमके इति न भवति। किन्तु प्रथमका इत्येव ‡। अत्र च केन व्यवस्थाना न शी भावः। सर्व्वादिषु उभयनेमयो र्गण-

---

* कतरकतमका इति क एव भवतीति वृत्ति ('ठ')('च')।

† "इति न भवति" इत्यत्र 'ठ' 'च' पुस्तकयो र्विद्यते, "इति व्यवस्थित विभाषे" त्यादिक केवल 'ट' पुस्तक एव।

‡ प्रथमे इतिवत् प्रथमके इति न भवति। किन्तु प्रथमका इति क एव ('ठ' 'च')।

पाठेन सर्व्वनामत्वा दुभयके नेमके, नित्यमकच् । इह तु नेमाः उभया इत्यर्थं विभाषाविधिः । अत्र वृत्तिः । गणपाठादुभयशब्दस्य संज्ञा नित्यैव । जसनेन विभाषातयप् सम्बन्धे नानुमितत्वात् । "श्रुतानुमितयोर्हि श्रुत. सम्बन्धो बलवान्" इति उभया इति न भवतीति ।

पूर्व्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया मसंज्ञायाम् ॥ ३४ ॥

इमानि जसि सर्व्वनामानि वा स्युः । पूर्व्वे, पूर्व्वाः ; परे, पराः । व्यवस्थायां किं ? दक्षिणा स्नाताः प्रवीणा इत्यर्थः । असंज्ञायां किं ? उत्तराः कुरवः ।

'पूर्व्व' । शब्दरूपापेक्षं क्लीवत्वमिति कर्तृकतोऽवधिनियमो व्यवस्था । अतएव निर्द्देशाल्लिङ्गम् । न चडिति अभिधानप्रामाण्यादिति स्वागादि (१ । १ । ८१) सूत्रे वक्ष्यते । 'उत्तराः कुरव' इति । सत्यामेव व्यवस्थायामिय संज्ञा । (अत्र जम्बुद्वीपं सुमेरुं वा अवधिमपेक्ष्य उत्तरशब्दो वर्त्तते इति व्यवस्था भवतीति न्यासः । ) अवानेन विकल्पाभावेऽपि सर्व्वादित्वात् संज्ञा या नित्या प्राप्नोति, सा कथं नेति न देश्यम् । अयोऽपि व्यवस्थायामसज्ञायामित्यादि विशेषण मस्तीत्येतुक्तं प्राक् ।

स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

जसि स्वं सर्वनाम वा स्यात्। स्वे गावः। स्वा गावः। अज्ञाति धनाख्यायां किं? स्वा ज्ञातयः, प्रभूताः स्वा दीयन्ते।

'स्वं'। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। इह च स्वमिति क्लीबत्वमविवक्षितं ज्ञातिनिषेधात्। ततश्च शब्दरूपापेक्षं क्लीबत्वम्। 'स्वा अन्तय' इति। स्वा ज्ञातयोऽस्मिषदित्यर्थः। 'स्वा ज्ञातय' इति पाठे वा इत्यस्यार्थकथनं ज्ञातय इति। "पर्यायशब्दोऽपि यत्रानेकार्थः सन्दिग्धार्थो वा भवति तदर्थस्यैवाभिव्यक्तीकरणार्थः"। आख्यापदेन यदा त्वात्मीयेऽर्थे स्व-शब्दो ज्ञाति सामानाधिकरण्येन प्रयुज्यते, तदा स्यादेव विभाषेति बोध्यते। अमी ज्ञातयो मम, स्वे आत्मीया इति यद्वोद्दिष्ट इति यावत्।

अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

अन्तरं जसि सर्वनामसंज्ञं वा स्यात्। बहिर्योगे, अन्तरा अन्तरे गृहाः, ग्रामबाह्या इत्यर्थः। उपसंव्यान मधोवस्त्रम्। अन्तरे अन्तराः शाटकाः परिधेया इत्यर्थः॥

अपुरीति वक्तव्यम् ॥ * ॥

अन्तरायां पुरि वसति सर्व्वादित्वात् प्राप्तिः ।

वा प्रकरणे तीयस्य ङित्सूपसंख्यानं कर्त्तव्यम् ॥ * ॥

द्वितीयस्मै, द्वितीयाय ।

'अन्त'। अत्रापि शब्दरूपापेक्षं क्लीवत्वं। "बाह्ये चैव परिधाने च सदृशे चान्तरोऽस्त्रिया" मिति रुद्रधरलिखनादन्तरशब्दः पुंलिङ्गोऽपि। बहिर्योगेन योगो यस्य स बहिर्योग इति बाह्य उच्यते। बहि रित्यनेन अनावृतो देश उच्यते, तेन योगो बहिर्योगः। स चानावृतस्य बाह्यस्य वस्तुनो भवतीति न्यासः। "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुक" इति वचना दाह—'उपसंव्यान' मिति। संवीयते परिधीयतेऽनेनेति संव्यानम्। तत्समीपमुपसंव्यानं, वस्त्रान्तरेण पिहितवस्त्रमिति टीकायां स एवाभिप्रायः। वस्त्रमन्तरं परिधानं येषां ते वस्त्रान्तराः। कम्बलोऽन्तरं परिधानं येषां ते कम्बलान्तराः। कम्बलान्तराश्च वस्त्रान्तराश्च ते कम्बलान्तरवस्त्रान्तराः। इत्यत्र सर्व्वादित्वा न संज्ञा, अप्राधान्यात्। न चानेन "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति"। सर्व्वादित्वात् प्राप्तिरिति लिङ्गविशिष्टग्रहणा दित्यभिप्रायः।

तत्रापि 'बहिर्योग' इति विशेषणात् मूलनगरवाह्याया मित्यर्थः। प्राकारा हश्विर्वर्त्तनीया पू स्तस्या मित्यर्थो वा। 'वा प्रकरण' इत्यादि। तीयस्येति पुंलिङ्गनिर्देशा द्विभक्ती लिङ्गविशिष्टाग्रहण मिति स्याड्विधौ विभाषा द्वितीया तृतीयाभ्या मिति (७। ३। ११५) सूत्रं प्रपञ्चार्थं वा।

स्वरादि निपात मव्ययम् ॥ ३७ ॥

स्वरादयो निपाता श्चाव्यय मुच्यते। स्वर्, प्रातर्, अन्तर्, उच्चैस्, नीचैस्, दिवा, वहिस् मृषा, स्वयं, हे, है, स्वाहा, स्वधा, अद्धा, कं, शं शुभं,। स्वस्ति, अस्ति, आभीक्ष्णं। निपाताः च, वा, इव, एव, इति। इह स्वरादयो वाचका, चादयो द्योतका इति भेदः।

'स्वरा'। 'आभीक्ष्णं' इति। आभीक्ष्ण्ये ये ङि-स्वादयः प्रत्यया स्तेपीत्यर्थः। लुनीहि लुनीहि, लुनीथ लुनीथ, इति। ननु स्वरादयोऽपि चादिषु पठ्यन्ताम्। तथाच निपातत्वे निपातोऽव्यय मित्ये वास्तु किं स्वरादि पदेनेत्याह, 'स्वरादय' इत्यादि। चादयोऽसत्वे (१। ४। ५७) इति ये निपातसंज्ञका स्ते अद्रव्यवाचय इति। अस्वतन्त्रा हि यत्निकटे प्रयुज्यन्ते तदर्थद्योतकाः।

स्वरादयस्तु द्रव्यवृत्तयः स्वतन्त्रा इति चादिषु नैषां प्रवेशो युक्तः । स्वरादिष्वपि चादयो न विशन्ति असत्त्व एव तेषां निपातत्वात् । तदर्थं प्रादर्थञ्च निपातग्रहणस्यावश्यकत्वमिति भावः । अत्रापि प्रधानन्यायाश्रयणात् प्राप्तस्वरौ प्राप्तस्वर इत्यादौ नाव्ययत्वम् । न व्येत्यव्ययमिति महती संज्ञा । तदाश्रयणा द्वप्राधान्ये निषेधस्तदन्तविधिश्चेति पञ्जिका ।

"सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु ।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम् ॥"

इति । अस्यार्थः, त्रिषु लिङ्गेषु स्त्रीपुं नपुंसकेषु सदृशं तुल्यं लिङ्गविशेषस्य अपरिग्रहात् । लिङ्गसामान्योपादानाच्च विभज्यते प्रातिपदिकार्थं आभिरिति विभक्तयः, कारकाणि । अभिधायकोपचारात् वचनानि एकत्वादीनि च एतेषु च सदृशं यस्मा न व्येति लिङ्गादि विशेषानुपादानात् । विविध नानात्वं न गच्छति यस्मा दव्यय मित्यन्वर्थता । अतोऽपठितमपि कु-प्रभृतीत्यादि अव्ययं भवति । कुगतीत्यत्र (२ । २ । १८) महावृत्तिस्वरसात् । "स्कन्धात् प्रभृत्येव सपक्षपातो" ति कुमारकाव्ये । एवं वर्षार्थे संवत् । तथा क्रियार्थोपपद न्तुमुन् अव्यय-संज्ञाबलादेव न कर्त्तरि । अव्यय मिति विवरणे अव्ययानीत्यर्थः । "अव्ययाः परे" इत्यमरप्रयोगादर्द्धर्चादित्वात् ।

तद्धित श्चासर्व्वविभक्तिः ॥ ३८ ॥

सर्व्वा विभक्ति र्यतो नोत्पद्यते स तद्धितोऽव्ययं स्यात्। ततः यत्र विना नाना तसिलादिर्धाऽन्तः, कृत्वसुच्-सुचौ, शस्तसी, च्व्यर्थाश्च, किम्-तिङव्यय घा-द्दा-स्वद्रव्यप्रकर्षे किन्तरां। वति, ब्राह्मणवत्।

'तद्धित'। अविद्यमाना सर्व्वा विभक्ति र्यस्य स तथा। यस्मात् सुबन्तत्वेन पदत्वार्थं सु-मात्रमेव केवलं सुत्पद्यते नान्या काच विभक्तिः, तावतैव साधुत्वात्। 'स तद्धित' इति तत्स-म्बितान्त इत्यर्थः। तत्र स्वभेति तद्धितान्तस्य, प्रातिपदिकत्वे पञ्चमीसप्तम्यो लुंक्। तद्धितयो र्व्विभक्तित्वे तयोः परतः त्यदा-द्यत्वं समुदायात् * साधुत्वार्थं प्रातिपदिकार्थं (२। ३। ४६) सूत्रे प्रातिपदिक ग्रहणात् सुः। अनेनाव्ययत्वे तस्याव्ययादाप्-सुप (२। ४। ८२) इति लुक। 'विना नाना' इति। विनञ्भ्यां नानाञौ न सह (५। २। २७) इति वि शब्दात् नञ्-शब्दाच नानाञ् नकारस्याकारवृद्धिः †। 'तसिला—

---

* समुदाय (ट)।

† इयदेव शब्दशक्ति यथा विना मूलात् चर्वाणि अभिधानानपि विना-नाना शब्दो कारकतो नास्ति केवलं वज्रमाने वर्ण्णं वर्त्तते (इन्दविम. पाठ 'ठ'।

दिरैवेत्यादि' पञ्चम्या स्तसिल् (५।३।७) इत्यत आरभ्य। एधाच् (५।३।४६) पर्य्यन्ता ये तद्धिता स्तदन्तोऽव्ययम्। कृत्वसुच् (५।४।१७) सुचौ (५।४।१८) संख्याया विहितौ। शस् बह्वल्पार्थादिभि (५।४।४२) र्विहितः तसिश्च प्रतियोग (५।४।४४) इत्यादिभि स्त्र्यर्थाय डाच् प्रत्ययान्ताः (५।४। ५७—६७) आमु प्रभृतयश्च। 'वतीति' तेनतुल्यमित्यादिना सूत्रेण विहितः. ब्राह्मणवदिति दिग्दर्शनाय। तद्धितः किं? एको द्वौ बहवः। गोदौ नाम ह्रदौ। तयो रदूरभवो ग्राम इति अदूरभवश्चे (४।२।७०) तस्यो वरणादित्वा (४।२। ८२) लुपि। लुपि युक्तवदिति (१।२।८१) युक्तवत्वात् यद्यपि द्विवचनान्तमेव तत् तथापि गोदौ ग्राम स्तिष्ठतीति गोदौ ग्राम गच्छति गोदाभ्यां ग्रामेण सम्पृक्तमित्यादिरीत्या सर्व्ववि-भक्तित्व मिति नैतत् सूत्रविषयः।

## कृन्मेजन्तः॥ ३८॥

मान्तः कृदव्ययं स्यात्। कर्त्तुं स्वादुङ्कारं स्वपोषं पुष्टः, ईहाञ्चक्राते। एजन्तः कृच्छान्दसः (३।४ ९—११ १४ १५)।

'कृन्मे'। 'मान्तः कृदिति' प्रत्ययग्रहण-परिभाषया

ऌदन्त उपपन्नः। स च मकारेण विशिष्यत इति येन विधि रिति (१।१।७२) तदन्तविधि रत्यत्र। तथाप्यन्त-ग्रहणस्य फलं वक्ष्यति। 'सर्त्तुमिति' मकान्तोत्यादि शेषम्। 'ईहाञ्चक्राते' इति ईहधातो रिजादेश्चेत्या (३। १। ३६) मि लेः आम इत्यामः (२।४।८१) परस्य लिटो लोपेऽपि प्रत्ययलक्षणेन (१।१।६२) ईहाम् शब्दः ऌदन्तः। लिटः कर्त्तृवाचकत्वात्। आम् तु द्वितीयधात्वधिकारे विहितो नेति न ऌत्। तर्हि नमु स्वामी क्विपि अनुनासिकस्य क्विझलोरिति (६।४।१५) दीर्घत्वे प्रताम्मौ प्रताम इत्यत्र वत्स्याम भवति भत्रापि मान्तस्य ऌदन्ततया ऌदन्तत्वात्। उच्यते। प्रत्यया प्रत्यय परिभाषया प्रत्ययावयवमकारान्तत्वं ग्रहीष्यत इत्यदोषः। तर्हि धातो मनिन् (३।२।७४) सुदामा, तमाचष्टे णिच् सुदामयति ततः क्विपि सुदामौ सुदाम इत्यत्र स्यात्। एतदर्थं मिवान्तग्रहणं प्रत्ययावयवोऽन्त्यएव यो मकारस्तदन्तः ऌदन्तोऽव्ययम्। सुदामा विल्यत्र विकारे सत्येव मान्ततेति सकल चारु। ईहा मित्यत्र तु ऌदन्तत्वेन प्रातिपदिकत्वे प्रथमा द्विवचनं तस्यानेनाव्ययत्वे लुक्, पदत्वे मोऽनुस्वारस्य (८। ३।२३) ययि परसवर्णो (८।४।५८) ऽकारः। महाहस्तौ तु आम्स्वरादिष्वेव पठित इति तेनैवाव्ययत्वम्। 'एजन्तः ऌदिति' नम कुम्भकारेभ्य इति भाष्येत्वे (७। ३। १०२) चिकीर्षवे इत्यादौ घेर्ङिति (७।३।१११) गुणे च ग्रहणम्।

लाक्षणिकत्वात् भूवादय (१ । ३ । १) इति निर्देशाच्च ।

क्त्वा तोसुन् कसुनः ॥ ४० ॥

क्त्वा अव्ययं स्यात् । कृत्वा, प्रकृत्य । तोसुन् कसुनौ छान्दसौ (३ । ४ । १३, १६) ।

'क्त्वा'। 'प्रकृत्येति' स्थानिवत्त्वा दव्ययत्वम् ।

अव्ययीभावश्च ॥ ४१ ॥

अव्ययं स्यात् । उपाग्नि, प्रत्यग्नि, इह लुगेव संज्ञाप्रयोजनं । नाकजादिरिति (५ । ३ । ७१) स्मृतिः । उक्तमव्ययम् ।

'अव्य'। 'उपाग्नीति' नित्यसमासस्थले वाक्य-व्युत्पादनाय तदर्थं अन्यपदे स्वार्थं दर्श्यते इति अग्नेः समीपमिति वाक्यम् । अव्ययं विभक्तीति (२ । १ । ६) समासः, 'प्रत्यग्नीति' अग्नेरभिमुखं लक्षणेनाभिप्रती (२ । १ । १४) इति समासः । 'इहेति' तद्धितेत्यादि सूत्रचतुष्टय इति केचित् । तदयुक्तम् । तत्रास्य इत्यव्ययत्वप्रयोजनाभावात् अटं कृत्वेत्यव्ययेन

योगे षष्ठीनिषेधात् । "अनुकृत्य रथो राज्ञ" इति वृन्दावनकाव्ये तु शेषविवक्षया । तस्मात् इहेति चाव्ययीभावश्चेति सूत्रे। 'स्मृति रिति' अभिधानाभावादकजादि रिह न भवति । आदिपदाच्च गोत्रोऽपि साहश्ये पुत्त्रस्य सदृशी सपुत्त्रं सपुत्त्र मात्मानं मन्यते सपुत्त्रम्मन्या कन्येति अव्ययसंज्ञाया अभावात् अनव्ययस्येति न निषेध इति। अरुर्द्विषदजन्तस्येति (६। ३। ६७) मुम्भवति । ननु उपपयःकार. उपपयःकाम इति, अतः कृकमीति (८। ३। ४६) सत्वं अनव्ययस्येति निषेधान्नास्तीति विसर्गजिह्वामूलीयौ भवत इति। तत्र हृसि स्यात् किमुच्यते लुगेवेति ? सत्यं। अनुत्तरपदस्थस्येत्यनुवर्त्तते तत एव । तत् सिद्धेः अकचोऽभावात् कप्रत्यय इति उपास्तिकमिति भवति ।

शिः सर्व्वनामस्थानम् ॥ ४२ ॥

सुडनपुंसकस्य ॥ ४३ ॥

जसिशसोः * शिः (७। १। २०) अनपुंसकस्य सुट् सर्व्वनाम स्थानमुच्यते । शिः, कुण्डानि, दधीनि । सुट्, राजा, राजानौ, राजानः;

* 'जश्शसोः शि' इति पाठः काशिकादा अन्यत्रापि च दृश्यते ।

राजानं, राजानौ। सीमा। अनपुंसकस्य किम्? सामनी, धामनी।

'शिः'। 'सुट्'। सर्वनामस्थानमिति महती संज्ञा। सर्वेषां नाम्नां प्रातिपदिकानां स्थानमिहेति। अत्र हि सर्वाण्येव प्रातिपदिकानि स्वरूपेणैवावतिष्ठन्ते। भसादिषु तु भत्व-पदत्वादिभिः प्रायेण विकृतानि भवन्तीति बोधयति। पेचुषः पचुष इत्यादौ कृतोऽपीड्वधि निवर्त्तते। सम्प्रसारणेन निमित्तस्य वलादित्वस्य (७।२।३५) विहितत्वात् "एकदेशविकृतानन्यत्वेऽपि सामान्यातिदेशे विशेषस्यानतिदेश" इति विशेषानतिदेशात्। नित्यत्वादेव सम्प्रसारणं भविष्यति, किमनेन यत्नेन? नैवम्। अन्तरङ्गत्वात् भसंज्ञा-निमित्तप्रत्ययोत्पत्तेः प्रागेव इटो जातत्वात्। तथापि सम्प्रसारणं तदाश्रयञ्च कार्यं बलीय इति इटोऽपि पूर्वं तदेव स्यादिति च न वाच्यम्। इटो विषये तस्य वचनस्याभावात्। तथाहि वशिल्वेति (७। २। ८) प्रथम मिट्, ततश्च न क्त्वा सेडिति (१।२।१८) कित्वनिषेधात् न सम्प्रसारणमिति व्यवस्था तस्यामवस्थायाः संज्ञाया एतदेव फलम्। अन्यथा प्रदेशवाक्ये शि न सान्यमुटीति अनु किं संज्ञया न सविषयस्यानिगमस्येति स्वरसूत्रे नप-शब्दो नपुंसकार्थ-स्ततोऽन्यस्य सुडित्यर्थः। सुडितिप्रथमैकवचनात् औटष्टका-रेण संज्ञा। कुण्डानीति जसः शिः (७। १। २०) नपुंस-

कस्य झलच (७।१।७२) नुम्, सर्व्वनामस्थाने चेति (६।४।८) दीर्घः, राजेति पुंसि। सोमा इति स्त्रियाम्। मन (४।१।११) इति निषेधात् ङीप्। डाप्च (४।१।१३) पाक्षिकः। 'सामनी' इति सर्व्वनामस्थानत्वाभावान्न दीर्घः।

## नवेति विभाषा ॥ ४४ ॥

न-वा-शब्दयोरर्थो विभाषासंज्ञकः स्यात्। निषेधेन समीकृते विषये विकल्पः प्रवर्त्तते, उभयत्र विभाषा प्रयोजनम्। यथा विभाषाश्वेः (६।१।३०) सम्प्रसारणम्। शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः।

'नवा'। नवाशब्दो निषेधवाची नवा नवान्य भुक्तार्थत्वा दित्यादिदर्शनात्। पक्षपडोऽप्येको निपातोऽस्ति। स नेह गृह्यते। विभाषा इति प्रकृते बहुव्रीहौ पुनः प्रतिषेधात्। किन्तु नशब्दो निषेधवाची। वाशब्दो विकल्पार्थः। यत्र यत्र विभाषापदं, तत्र तत्र नवाशब्दावुपतिष्ठेते। उपस्थाय च स्वार्थं प्रकाशयत इति क्रम मनुसन्धाय आह, 'नवाशब्दयोरर्थं' इति। फलमाह निषेधेनेति। वस्तुतो न समः। किन्त्वनेन नवाशब्दान्तर्गतेन निषेधेन समः क्रियत इति चिः। ननु

वाशब्द एव लोके विकल्पार्थत्वेन प्रसिद्धः। प्रदेशेषूपादीयमानो विकल्पेन कार्य्यं सम्पादयिष्यते। तथाहि प्राप्ते विकल्पः क्रियेत। अप्राप्ते वा तत्र यथायोगं विधिः प्रतिषेधश्च पाक्षिकः स्यादेव, किं संज्ञाकरणेनेत्याह, 'उभयत्रेति'। उभयत्र प्राप्ते चाप्राप्ते च विभाषाश्वेरिति (६। १। ३०) तत्र लिड्यङो रित्यनुवर्त्तते। अत्र यदि यजादित्वात् किति (६। १। १५) प्राप्तं लिटि विकल्प्यते तदा शुशुवतुः शिश्वियतु रित्यत्रैव स्यात्। न शुशाव शिश्वाय इति। असंयोगाल्लिट् किदि (१।२।५) त्यत्रापि इत्यनुवृत्तेः। यदि अप्राप्तमेव विधीयते तत्साहचर्य्येण लिट्यपि अकिति अर्थात् णल्येव स्यादिति। ततश्च शुशाव शिश्वाय इत्यत्रैव स्या न किति उभयत्रापीष्यते तदर्थमिदम्। अत्र विभाषापदेन प्रथमं निषेध उपस्थितः। श्रूयते यदुक्तं तल्लिटि नास्ति। यत्र न प्राप्नोति तत्र नास्त्येव, यत्र प्राप्तं तत्रापि निषेधितम्। अनन्तरं वेति किड्-यङ्मात्रे उभयत्र भावाभावौ भवत इति सूत्रार्थः। इति शब्दाऽव्ययानामनेकार्थत्वात् प्रकारार्थ इति विभाषा जसी (१। १। ३२) त्यादौ विकल्पार्थमेव संज्ञासंज्ञि-सम्बन्धेन तरप्तमपौ घ (१। १। २२) इत्यादिषु दृष्टमपिस्वरूप-पदार्थं नात्र गृह्यत इति-करणात्। इति-शब्दो विपर्य्यासकृत् यथा गवित्ययमाहेति। अयन्तु गोशब्द अर्थपदार्थकत्वात् प्रत्याय्य शब्दपदार्थकोऽवस्थापयति। तथा इहापि स्वरूपात् प्रच्याव्य न-वा-शब्दो अर्थपरत्वेऽवस्थापयति इति-शब्द इति नन्दी। "ट्

श्वो श्वि गतिवृद्ध्योः" लिट् णल् विभाषा श्वे रिति (६ । १ । ३०) सम्प्रसारणम्। सम्प्रसारणाच्चेति (६ । १ । १०८) पूर्व्व-रूपत्वं अचोञ्णितीति (७ । २ । ११५) वृद्धि रौकारः शौरूपस्य द्विर्व्वचनम् ।

## इग्यणः सम्प्रसारणम् ॥ ४५ ॥

यणः स्थाने भूतो भावी वा य इक् स सम्प्रसारण मुच्यते। इष्टं, उप्तं, गृहीतं, शौयत। अथ षष्ठीनिर्द्दिष्टमधिकृत्याह।

'इग्यणः'। इदमपि पूर्व्ववत् संज्ञापरिभाषात्मकं सूत्रम्। परिभाषात्वमाह, 'भूतो भावी वेति'। यत्र सम्प्रसारणं विधीयते तत्र भाविपदम्। यत्र कार्य्यार्थं मनूद्यत इति तत्र भूत-पदं, तत्र यण इगिति विधौ उपतिष्ठते। 'इष्टमिति' यजादीनामिति (६ । १ । १५) विधिः सम्प्रसारणाच्चेति (६ । १ । १०८) परस्य अकारस्य पूर्व्वरूपत्वमित्यनुवादः। यण इगिति यथासंख्यभावेनोपतिष्ठत इति ऐधिषितरामित्यत्र लुङि लादेशेऽपि इटि सम्प्रसारणपदेन न व्यवहार इति सम्प्रसारणस्येति (६ । ३ । १३८) न दोषः। इष्ट मिति यज देवपूजादौ क्तः। एकाच इतीण्निषेधः। व्रश्चादिसूत्रेण (८ । २ । ३६) षत्वं टुत्वञ्च

(८।४।४१)। 'ग्रहीतमिति' ग्रहिज्येति (६।१।१६) सम्प्रसारणं ग्रहः (७।२।३७) इति दीर्घः। शिष्यानुग्रहार्थमाह, 'अथषष्ठीति' पारिशेष्यात्।

## आद्यन्तौ टकितौ ॥ ४६ ॥

षष्ठीनिर्दिष्टस्य आदिष्टिद्भवति। अन्तः किद्भवति। लविता, भीषयते।

'आद्यन्तौ'। आद्यन्तशब्दाववयववचनौ। आदित्वे लवितेति इड्विधे र्व्यंजनवत्वात् पूर्व्वमित्यार्द्धधातुके (७।१।८४) गुणः। अन्तत्वे भियोहेतुभये षुगिति (७।३।४०) षुकि अनजन्तत्वाद्भीषयते इति णिचि न वृद्धिः। एवं एकान्नविंशति रिति एकस्य अदुकि (६।३।७६) पदान्तदकारस्य यरोऽनुनासिके (८।४।४५) भवति वा।

## मिदचोऽन्त्यात् परः ॥ ४७ ॥

अचां मध्येऽन्त्यादचः परो मित् स्यात्। पयांसि सिञ्चति। रुणद्धि।

मस्जिरन्त्यात् पूर्व्वं नुम मिच्छन्त्यनुषङ्गसंयो-

गादिलोपार्थम् ॥ * ॥
मङ्क्ता, मग्नः।

'मिद्'। अन्त्यादचः पर इति वर्णानां समाप्ति रस्तु तत्र भवोऽन्त्य इति दिगादित्वात् (४।३।५४) यत्। एवं वनानि कुण्डानीत्येव स्यात्। पयांसीत्यादौ तु अचोऽन्त्यत्वं न सम्भवतीति हृष्टा विशिनष्टि। 'अचां मध्य' इति। निर्धारणस्य साजात्यमूलकत्वात् त्यपद्दमिति (७।१।८२) निर्देशाद्वाऽन्त्यो प्यजेव लभ्यते। अच इति निर्धारणषष्ठी जातावेकवचनं (१।२।६)। अचां मध्ये योऽन्त्योऽच् तस्मात् परो मिदिति फलार्थं। त्यपद इति निर्देशात् नुम आगमत्वं प्रत्ययत्वञ्च, प्रत्ययत्वेऽपि मकारस्येत्संज्ञा। पयांसीति सान्तमहत इति (६।४।१०) दीर्घः। अनुषङ्गेत्यादि मग्न इत्यत्र उपधानकारस्यानुषङ्गस्यानिदितामिति (६।४।२४) लोपो यथास्यात्। मङ्क्त्यत्र स्कोः संयोगाद्योरिति (८।२।२९) सकारलोपो यथा स्यात् इत्येवमर्थम्। मस्जेरन्त्यात् पूर्वं नुमिति अन्यथा नयाणां संयोगसंज्ञायां सकारो मध्यः स्यादिति भावः। अनुषङ्ग इति उपधा-नकारस्य पूर्वाचार्यसंज्ञा। इच्छतीतिपदेन अयजपि सूचिता। अचः पर एव नुम्भवतु। कथं त्रिषु हल्सु मिलितेष्वपि द्वयोः संयोगसंज्ञास्यादेव? तथाच सकार-जकारयोर्हलोः संयोगसंज्ञायां स्कोरिति (८।२।२९) लोपे मङ्क्तेति

स्यान्नचैव सिन्द्दिषीयिषतीति संयोगादिदकारस्य द्विर्वचनं निषेधः प्रङ्गः । अजादेरित्यनुवर्त्य आदेरचः परस्य संयोगादेरिति महावृत्तौ व्याख्यानादत्र न नकारेण व्यवधानात् । मग्न इत्यत्र च स्कोरिति (८ । २ । २९) सलोपे परत्वान् सुपधानकारस्य लोपे कर्त्तव्ये सलोपस्य असिद्धत्वा दनुपधात्वमिति नलोपो न प्राप्नोति । तदर्थं काचि वाचि आकाङ्क्षायां, व्राचि भ्राचि घोरे वाशिने च इत्यादीना मिदित्वं ज्ञापकं । अनुपधानकारस्यापि क्वचिल्लोपः । अन्यथा प्रक्रियालाघवाय काङ्गादीनेव पठेत् । तदेवमनं लोपो माभूदिति । अन्यथा सोऽनुपधात्वादेवाप्राप्तः । नमुने इति (८ । २ । ३) योग-विभागश्च न्यासे । ततोऽपि न-ल्-पः स्यादिति वा वक्तव्यम् । चोदितर्येति (८ । २ । ४५) निष्ठानत्वं तस्यासिद्धत्वा चोः कुरिति (८ । २ । ३०) कुत्वम् ।

एच इग्घ्रस्वादेशे ॥ ४८ ॥

एच स्थाने ह्रस्वादेशे इगेव स्यात् । अतिरि कुलं, अतिनु, उपगु ।

'एच' इति । परिभाषा सूत्रमिदं, समुदायात्मना सर्वा समुदायान्तरतमो नास्तीत्यवान्तरतम्या दकारोऽपि प्राप्तः ।

अनेन नियमेन व्यावर्त्त्यते। अकारेण श्लिष्ट इकार एकारो भवति, उकारश्च ओकारः। अकारश्लेषेण स ऽ ऐ औ च भवतीति परम्परया क्रमानन्तरतम्य लृकार-ऋकारनिवृत्त्यर्थं माश्रितम्। अतएव ए ऐ कण्ठतालव्योष्ठौ इति शिक्षाकाराः। राय मतिक्रान्तं कुलं मादिसमासः, ह्रस्वो नपुंसक इति (१।२।४७) ह्रस्व इकारः। स्वमो रिति (७।१।२३) सुलुक्। अतिरि इति नलुमताङ्गस्येति (१।१।६३) निषेधा दत्र रायो हलीति (७।२।८५) न भवति। अतिरिणीति सन्निपातपरिभाषाबलात् *। अन्यत्र अतिराभ्या मतिराभि रितीत्थम एव। अप्रधानेऽपि व्यासा नावमतिक्रान्त मतिनु, गोः समीप मुपगु, अव्ययं विभक्तीति समासः अव्ययीभावश्चेत्यव्य-यत्वम्। गो स्त्रियो रिति (१।२।४८) पूर्वेण वा ह्रस्वत्व विधित्वाभावादत्र न यथासंख्यमिति न्यासः। अत्रापि परम्पराक्रमानन्तरतम्यमवश्यं वाच्यं तथात्वे चाकिञ्चित्करमेतत्।

पष्ठी स्थानेऽयोगा ॥ ४९ ॥

अयोगा अव्यक्तसम्बन्धा पष्ठो स्थाने वेदितव्या।

---

* स इति एकार ओकारच ऐ औ इति भवत (टिप्पनी 'ट')।

* नास्ति (टिप्पनी 'ट')।

अस्ते र्भूः (२ । ४ । ५२) भविता। ब्रुवो वचिः (२ । ४ । ५३) वक्ता। अयोगा किं ? ऊदुपधाया गोहः (६ । ४ ८९) निगूहयति (?) ।

‘षष्ठी’। यत्र यत्र षष्ठी तत्रैवावयवावयविभावसम्बन्धः सुस्फुट स्तस्य बाध एव सम्बन्धान्तरं कल्प्यते, यथा अस्तेर्भूरि (२ । ४ । ५२) त्यादौ अस्तेरवयवो भूः स्या दित्यर्थे प्रसक्तेदमिष्ट मिति नियमसूत्रमिदम्। इह शास्त्रे षष्ठी स्थाने-योगा वेदितव्येति महावृत्तौ। स्थाने प्रसङ्गे योगो यस्या इति वैयाधिकरण्येऽपि समासः सप्तम्यलुक् च निर्देशात्। एवञ्च सूत्रार्थे ऊदुपधाया गोहः (६ । ४ । ८९) इत्यत्र उपधाया इति षष्ठी तावत् स्थाने-योगैव गोह इति षष्ठी। कथं स्थाने योगा नेति दोषमाशङ्कानियतयोगेति षष्ठ्या विशेषणं येषोक्तं वृत्तौ सप्तम सिद्धमाकलय्य नञ्प्रश्लेषेण सूत्रमिदमन्यथा व्याचष्टे। ‘अयोगेति’ ‘अव्यक्तसम्बन्धेति’। तद्विवरणं स्थाने वेदितव्येति। यद्यपि सकलैव षष्ठी समुचिता प्रसङ्गे। अप्रसङ्गे षष्ठीं विदधदाचार्य्य उपेक्षणीयः स्यात्। तथापि नवेति (१ । १ । ४४) सूत्रात् इति-पदमनुवर्त्त्य स्थाने इति वेदितव्येति योज्यम्। ततश्च सम्बन्धान्तरनिरासेन स्थानसम्बन्ध एवात्र पर्य्यवस्यते इति अस्तेः स्थाने प्रसक्ते भू र्भवतीति। गोह इति अवयवसम्बन्धे षष्ठीति। न तत्रास्यावसरः। स्थितिः स्थान

मिति भावसाधनम् । त्रिधा स्थानशब्दः, अपकर्षो निवृत्तिः प्रसङ्गः । गोस्थानेऽश्वो बध्यतां, क्रमेण स्थाने विकटुकमौषध, दर्भाणां स्थाने शरै रास्तरितव्यमिति । तत्राद्यो न सम्भवत इतीह प्रसङ्गः स्थानशब्दार्थः । प्रसङ्ग च सार्थकानर्थकसाधारणः प्रस्ताव इति । निरर्थकेच चोः कु (८ । २ । ३०) रित्यादावपि स्थानषष्ठेव । अर्थक्रियानिमित्तभूतस्य कालस्यावसरः प्रसङ्गः । यथा असेः प्रसङ्ग इति असेर्या अर्थक्रिया स्वार्थः । अत्रापिमतिः —

" आगमोऽनुपघातेन विकारः शोपमर्दनात् ।
आदेशस्तु प्रसङ्गेन लोपः सर्व्वापकर्षणम् ॥ "

इति न्यासे दिग्दर्शनमेवापकर्षणात् । तदीयाभ्या मेवाग-मविकारशब्दाभ्या मत्रापि व्यवहारः । उपगूहयतीति गुह संवरणे णिचि लघूपधगुणे गोहयणे ओकारस्य ऊकारः ।

स्थानेऽन्तरतमः ॥ ५० ॥

स्थाने प्राप्यमाणानां सदृशतम आदेशः स्यात् । सताग्र । कण्ठ्ययोः कण्ठ्यएव दीर्घः । अर्थतः, तरुणयुवती तरुण्यर्थ एव, पुंवत् उच्यते । गुणतः, पाक त्यागो रागः । अल्पप्राण-महाप्राणयो रघो-ष-घोषवतो स्ताहगेव कुस्यम् । प्रमाणतः, अमुष्मै

अमूभ्यां ह्रस्वदीर्घयो सत् प्रमाणावेव उकार-ऊकारौ। स्थानग्रहणं, स्थानार्थगुणप्रमाणेषु स्थानान्तर्यं बलीयो यथा स्यात्। चेता स्तोता प्रमाणान्तर्य्यां दृकारो माभूत्। तमप्ग्रहण बहुष्वन्तरेष्वन्तर तमो यथा, स्यात्। वाग्घसति त्रिष्टुब् भवति।

'स्थाने'। 'प्राप्यमाणानामिति' विधेयानामित्यर्थः। 'सदृशो वान्तराऽस्त्रिया मिति" इत्याह 'सदृशतम' इति स्थानसदृशतम इति स्थानसदृश उदाहरण 'समायमिति'। अर्थसदृश माह 'तरुणयुवति रिति,। तरुणस्य स्त्री तरुणी, गौरादीति (४।१।४१) ङीप्। कर्मधारय (६।३।४२) पुंवत्त्वात् रूपातिदेशेन तरुणी-शब्दस्य स्थाने पुंलिङ्गादेशे कर्त्तव्ये अर्थप्रत्यासत्त्या तरुणशब्द एवायाति। एतच्च प्रत्यासत्तेरेव पर्यायान्तरं उदाहरणान्तरञ्च। पचतीत्यस्य निश्चतायां द्विवक्ती पचति पचतीत्येव भवति नच पचति भुज्यतीति। प्रत्यासत्तावप्यर्थो विद्यते इति गुणतः उदाहरति 'पाकस्थम' इति। चकार-जकारयो स्तद्गुणवानेव कु। वर्गाणां प्रथमद्वितीयाः श्वसा श्वासाघोषा.। घोषवन्तोऽन्ये। वर्गाणां प्रथम-तृतीय-पञ्चमा यरलवाश्च अल्पप्राणा.। चकार-जकारौ अल्पप्राणौ। द्वितीय-चतुर्थाः महाप्राणा इति 'प्रतिपादयन्नाह ' अल्पप्राण-महाप्राण

योरिति'। प्रमाणसादृश्ये अमुमायिति अकारस्य मात्रिकस्य मात्रिक उकारः । अमूभ्यामित्यत्र सुपिचेति दीर्घत्वे कृते द्विमात्रिकस्य द्विमात्रिक ऊकारः । पूर्व्वस्मादेव स्थानग्रहणानुवृत्तौ पुनः स्थानग्रहणं किमर्थमित्याह 'स्थानमित्यादि'। इकार स्तालव्य, एकारश्च कण्ठतालव्यः, उकार ओष्ठ्यः, ओकारश्च कण्ठोष्ठ्य., इति स्थानसाम्या मात्रिकमपि अकार मपास्य एकार-ओकारौ क्रियेते । 'वहुव्वित्यादि'। उपात्तः प्रयत्नः इति । तेन सोष्मणा हकारस्य झयो होऽन्यतरस्या मिति (८।४।६२) पूर्व्वसवर्णे वर्ग-द्वितीय-चतुर्थाः सोष्मण इति वर्गद्वितीय-चतुर्थौ प्राप्नुतः । घोषवत्तोऽस्य इति हकारस्य घोषवतो वर्ग-तृतीयोऽपि घोषवान् प्राप्त, इति द्वितीय-तृतीय-चतुर्थेषु सम्भवत्सु चतुर्थ एव भवति । सोष्मत्वघोषवत्त्वरूपद्वयसत्वात् । द्वितीयो ह्यघोष स्तृतीयश्च न सोष्मेति ।

उरण्रपरः ॥ ५१ ॥

ऋवर्णस्य स्थानेऽण् रपरो भूत्वा प्रसज्यति । कर्त्ता, किरति, द्वैमातुरः, खट्वर्ध्यः, तवल्कारः ।

'उ'। इयमपि परिभाषैव । तेषु तेषु विधिसूत्रेषूपस्थाय तत्तद्विधिसूत्रेण विहितस्याणो रपरत्वं करोति । स्थान-षष्ठ्यानुवृत्त्या उरिति स्थानषष्ठी । 'रपरो भूत्वा प्रसज्यतेति'

"कार्य्यकाले संज्ञा-परिभाषे" इति न्यायादिधीयमानोऽण् परिभाषया अनया प्रथमं रपरो भवति, अनन्तर मादेशो भवतीत्यर्थः। नचैवं सर्व्वादेश-शङ्का। तरति (४। ४। ५) गिरत्व (१। २। ८१) किरता (६। १। १४०) विति निर्द्देशेभ्यः। कर्त्तेति गुणः, किरतीति ऋत इद्धातो (७। १। १००) रितीत्, द्वैमातुर इति द्वयो र्मात्रो रपत्यं, मातुरत् संख्ये (४। १। ११५) त्यण ऋकार उकार आदिष्टेषि। खट्वर्श्य इति आद्गुणः (६। १। ८७) योऽयमुभयस्थाने निष्पद्यते लभते असावन्यतरव्यपदेश मिति। पूर्व्वपरयो राकार-ऋकारयो राद्गुणो (६। १। ८७) भवत्यपि ऋकारसम्बन्धितया व्यवह्रियते यथा शक्येन विधि' कर्त्तुमिति। अतएव इतरर्त्ते अर्द्धर्चा (२। ४। ३१) इत्यादि निर्द्देशाः। ऋकार-लृकारयोः सावर्ण्य रपर (१। १। ५१) इति अयवरट् इत्येतत्सूत्रस्थ-रणब्देन लवित्यवस्थ-णकारेणापि सह र इति प्रत्याहारोऽत्र गृहीत इत्युदाहरति 'तवल्कार' इति। अण् किम्? सुधातु रकङ्च (४। १ ८७) सौधातकिः। अणिति पूर्व्वेण णकारेण च प्रत्याहार ग्रहणमिति उरणतः (७। ४। ७) अचीकृतत् अमीमृजत् इत्यादौ न रपरत्वम्। प्रसज्जति इति सञ्ज सञ्ज दंश सञ्चेति (६। ४। २५) न लोपः।

अलोऽन्त्यस्य ॥ ५२ ॥

आदेशोऽन्त्यस्यालः स्थाने स्यात् । इद्गोण्याः (१।२।५०) पञ्च गोणिः, इनस्तच (३। १। १०८) ब्रह्महत्या, राज्ञः कच राजकीयः, रुहः पः (७।३।४३) रोपयति ।

'पञ्चे'। 'पञ्चगोणिरिति'। पञ्चभिः गोणीभिः क्रीत इत्यर्थे समासः (२।१ ५१) क्रीतार्थे आर्हीयठक् (५। १। ३७) तस्य अध्यर्द्धेति (५। १ २८) लुक्। लुक्तद्धित लुकीति (१।२।४९) स्त्रीप्रत्ययस्य लुकि प्राप्ते इद्गोण्या (१। २।५०) इतीकारः।

ङिच्च ॥ ५३ ॥

ङिच्चादेशोऽन्त्यस्यालः स्थाने स्यात् । आनङृतो द्वन्द्वे (६।३।२५) माता पितरौ । अनङ् (७। १। ९३) सखा। तातङो ङित्वसामर्थ्या न्नाय मन्त्वविधिः स्मृतः। कुरुतात् ।

'ङिच'। चकारेण ङिदेव समुच्चीयते। ङिदेव यो ङित् यस्य ङकारस्यान्यत् प्रयोजनं नास्ति सोऽन्त्यस्य भवति।

तुद्योस्तु सातङ्गौ (७ । १ । ३५) गुणवद्भावादिकमपि फलमिति । सोऽनेकाल्त्वात् सर्व्वादेश एव, चितुतात् सृष्टादिति ।

## आदेः परस्य ॥ ५४ ॥

परस्य कार्य्यमुच्यमानमादेरलः स्थाने प्रत्येतव्यं, यत्र पञ्चमीनिर्द्देशः । ईदासः (७ । २ । ८३) आसीनः । अलोऽन्त्यस्य (१ । १ । ५२) पवादत्वात् अनेकाल् शि (१ । १ । ५५) दित्यनेन बाध्यते अतोभिस ऐसिति (७ । १ । ९) सर्व्वैः ।

'आदेः'। परस्येति सम्बन्धि-शब्दत्वादाह 'यत्र पञ्चमीनिर्द्देश' इति । ईदिति तकारो मुखसुखार्थ इति नानेकाल्त्वं अनेकाल्शिदिति (१ । १ । ५५) शिद्ग्रहणात्, नानुबन्धकृतमनेकाल्त्वम् । णलस्तु इत्संज्ञानन्तरं हि णकारस्यानुबन्धता इत्संज्ञा च । चुटू (१ । ३ । ७) इति प्रत्ययादित्वे । अतो विधानकालेऽनेकाल्त्वमेव सम्यक्त्वमिति युक्तैव सर्व्वादेशता । यद्येवं शिदित्यनर्थक, शि-शीप्रभृतौ लशक्व तद्धिते (१ । ३ । ८) इति इत्संज्ञा । सा च प्रत्ययादित्वे । अतो विधानकालेऽनेकाल्त्वात् सर्व्वादेश एव स्यात् । सत्यम् । अतएव भाषावृत्तौ एश् उदाहरिष्यते । तत्रहि हलन्त्यमिति (१ । ३ । ३) शकारस्येत् संज्ञा । नानुबन्धकृतमनेकाल्त्व मित्यस्य ज्ञापकमेव ।

अनेकाल् शित् सर्व्वस्य ॥ ५५ ॥

अनेकालादेशः शिच्च सर्व्वस्यैव स्यात् । अस्तेर्भूः (२ । ४ । ५२) भविता, लिटस्तझयोरेशिरेच् (३ । ४ । ८१) पेचे । उक्ताः षष्ठीनिर्द्देशाः ।

'अनेक'। एकस्मादन्योऽनेकः । द्वौ च बहवश्चेति । इरेच्-स्यादिवद्दूरपि सर्व्वादेश एव ।

स्थानिवदादेशो ऽनल्विधौ ॥ ५६ ॥

आदेशाः स्थानिवद्भवन्ति । ब्रूञ् वक्तव्यं वक्ता । धातोरिति तव्यदादयः । आवधिष्ट आहन्तः आङो यमहन (१ । ३ । २८) इत्यात्मनेपदम् । अनल्-विधौ किम् ? वर्णविधौ माभूत् । द्यौः, पन्थाः, सः । हल् (६ । १ । ६८) इति न सुलोपः ।

आङ्भिभुवोरीटि प्रतिषेधो वक्तव्यः ॥ * ॥

आस्थ, अभूत् । ब्रुव ईट् (७ । ३ । ९२) अस्ति सिचोऽपृक्ते (७ । ३ । ९६) इतिचमाभूत् ।

'स्थानि'। स्थानमस्यास्तीति स्थानी पूर्व्वस्थितः । तदा-

यं कार्य्यमादेशेषु न प्राप्नोतीति तद्विधानार्थमतिदेशसूत्र-मिदम्। स्थानिना तुल्यं वर्त्तत इति स्थानिवत्। कया क्रियया तुल्यमित्याह 'भवन्तीति'। स्थानि यथा कार्य्याणां निमित्तं भवति तथा आदेशोऽपि भवतीति भावः। "यत्रान्यत् क्रिया-पदं नास्ति तत्रास्ति भवन्तिपरः प्रयुज्यते" इति न्यायात्। तथाच च याह्वन-क्रियया तुल्यत्वे पिबति रित्यत्र स्थानिवदि-त्येव ज्ञापकम्। तथाच पुनः पितृवद् गोमानित्यपि भवति।

"तत्पदद्यन्य शेषाहिः सखिवद्दत्वाननः।

मद्वासाहसिना माद्यं तमीड़े जलशायिनम्॥"

इति रुद्रः। स्थानी भवतीत्येतावतापि सिद्ध्यति। स्थानि-विधानसामर्थ्यां अन्यथा तत् कार्य्यकारित्वमेव भायास्यति। किं वतिना? नच स्थानिसंज्ञायां विशेष-विहित मेव स्यात् इति शङ्कां व्याप्तेर्न्यायात्। सत्यं वत्करणादादेशस्य स्थाश्र-यमपि कार्य्यं भवति तेनावरिष्टेत्यत्रानेकाच्त्वा देकाच (७। २।१०) इत्यादिना नेट्प्रतिषेधः। नच घस्ते घकारकरणस्य सामर्थ्यादिट् स्यादिति वाच्यम्। अवधीदित्यत्राल्लोपस्य (६। ४।४८) स्थानिवत्त्वादतो हलादेरिति (७।२।७) हलन्तस्य प्रद्दिर्मा भूदित्येव मर्थत्वात्तस्य। भूत्विति आर्द्धधातुके विषयभूते अनुपपन्न एव भुवोवचि (२।४।५२) रतो धातुत्वात्तव्यदादय उक्ताः। 'आहन्ते रात्मनेपदमिति'। यद्यपि आत्मनेपदे-ष्वन्यतरस्यां (२।४।४४) इत्यात्मनेपदेष्वेव वधादेशो विधीयते

तथाप्यार्द्धधातुक इति विषयसप्तम्यन्तस्य प्रकरणात् आत्मनेप-देष्विति च विषयसप्तम्येव स्यादितीदमुक्तम्। ननु युष्मदस्मदो रनादेशे (७।२।८६) इत्यनादेश-ग्रहणात् ज्ञापकात् स्थानि-कार्य्यस्य आदेशे सिद्धौ किमनेन सूत्रेण? नैवम्। यदि अत्र अनादेश-ग्रहणं न स्यात् तदा युष्मद्गच्छति इत्यत्र नित्यत्वात् परत्वाच्च प्रथममात्वं स्यात्। तत आदेश इत्यनिष्टं स्यात्। शब्दान्तरस्य हि प्राप्नुवन् विधिरनित्य एव। अनादेश-ग्रहणेतु तत् सामर्थ्यात् न भवति। 'वर्णविधौ माभूदिति' स्थान्वत् मान्विल्य यो विधिः प्राप्नोति स न भवतीत्याह 'हल्' इत्यादि। आदेशा लाश्रयविधावित्यादि इतितु न वाच्यम्। यौ रित्यादौ सुलोपप्राप्तेः। सोऽच लोप (६।१।१३४) इति च तदा न प्रयुज्येत स्यपो लकारस्येत्संज्ञार्थम्। स्थानिवत्त्वेन प्रत्यय-त्वाच्च; अतएव मयूरव्यंसकादौ (२।१।७२) प्रोष्यपापीया-निति कष्टायेति च आदेशयआश्रयं हलिच (८।२।७७) इति दीर्घत्वं न स्यात्। तस्मात् स्थान्वलाश्रयविधाविति स्थितम्। ननु च अदोजग्धि (२।४।३६) रित्यत्र ल्यप्-ग्रहणं ज्ञापकं भविष्यति। यदि अल्विधावपि स्थानिवत्त्वं स्यात्। किं ल्यपा तितिकीति सिद्धेः। तस्मात्तत एव सिद्धौ किं अनल्विधिग्रहणेन? नैवम्। स्थितेऽपि प्रतिदीव्य इत्यत्र इड्भावार्थं ल्यब्ग्रहणं ज्ञापकम्। "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते" इति अन्यथा पूर्वमेव आवश्यार्यां जग्धिः

स्यात्। नच इट् सहितस्यैव ञ्चो ल्यबादेशः (७। १। ३७) स्यात्। निर्द्दिश्यमान-परिभाषाबलात् न ञ्चा वेड़िति (१। २। १८) किल्वनिषेधे पूर्व्वासिद्धत्वाद्दीर्घे निरस्ते गुण-प्राप्तेश्च। क्वतेतु ल्यबादेशे वलादित्वम् (७। २। ३५)। बलमाश्रित्य इड्-विधि रिति न स्थानिवत्त्वम्। "सानुबन्धकत्वेन इड् विधि र्नाल्विधि रिति" अग्रहोदित्यत्र ग्रहोऽलिटि दीर्घस्य (७। २। ३७) स्थानिवत्त्वादिट्त्वमिति इट ईटीति (८। २। २८) सिचोलोपः, अतएव अह ईड़लिटीति नोक्तमिति न्यासः। स्थानिसम्बन्धादेव प्रतीता वादेशवचनं साक्षात्-सम्बन्धि-प्रतिपत्त्यर्थं, तदुच्यते "शब्दोह्याकाङ्क्षा शब्दे नैव प्रपूर्य्यते" इति इटि प्रतिषेध इति। ईटि विषये स्थानिवद्भावस्य प्रतिषेध इति। बूह्वारा चक्षिडारा च ईमभवति।

## अचः परस्मिन् पूर्व्वविधौ ॥ ५७ ॥

अल्विध्यर्थोय मारम्भः नियमार्थो वा। अजादेशः परनिमित्तकः पूर्व्वस्मिन् विधौ कर्त्तव्ये स्थानिवद्भवति। पटयति, लघयति। अवधीत्, टिलोप (६। ४। १५५ वां) स्यागो लोपश्च (६। ४। ४८) च स्थानिवत्त्वान्नवृद्धिः।

'अचः'। अचोऽन्त्यादि टि (१।१।६४) इति टि संज्ञा क्रियते। यत्र चाटिपदार्थः सम्भवति तत्रातामाथा मित्यादौ टित्वमबाधित मेव। यत्तु अचः परभागो नास्ति तत्र एकस्यैव तस्य व्यपदेशिवद्भावेन टित्वं क्रियत इति एके, व्यपदेशिवत्त्वेन अनजादेरपि अजादिसमूहत्व प्रकल्प्य टित्वं क्रियत इत्यन्ये। एवं भसंज्ञाधिकारेऽपि विशेषण-विशेष्य-भावस्य कामचारात् अतो लोप (६।४।४८) इत्यत्राङ्गावयवस्यातोऽन्त्यस्य लोपो भवति अकारान्तस्याङ्गस्य लोप उच्यमानोऽन्त्यस्य भवन् अकारस्य भवतीति वा। तत्राद्ये शुद्धस्य वर्णस्य टेरिति लोपेऽङ्गावयवस्य अतो लोपेच अल्विधित्व मिति पूर्वेण न प्राप्नोतीत्याह 'अल्विध्यर्थोऽयमारम्भः'। अल्त्वेतु व्यपदेशेन समुदायस्य टेर्लोपे भदन्तस्याङ्गस्य लोपेच अनल्विधित्वमेव किमनेनेत्याह 'नियमार्थो वेति'। सावधारणत्वात् सकलवाक्याना मच एवादेश इति व्याख्यानात् हलचोरादेशे न स्थानिवदिति विंशमित्यत्र तिलोपेऽपि परत्वलम्। परस्मिन्निति निमित्त-सप्तमीत्याह 'परनिमित्तक' इति। परो निमित्तं यस्य स तथा तेन युवजानि रित्यत्र जायाया निङ् (५।४।१३४) इति अपर निमित्तको निङ् यलोपे कर्त्तव्ये स्थानिवन्नभवति। हलस्त्वादेशः परनिमित्तकोऽपि न स्थानिवत् तेन आगत्येति वा ल्यपीति (६।४।३८) अनुनासिकलोपः तुकि न स्थानिवत्। अजादेशोऽपि पूर्वस्य विधावेव स्थानिवत्

तेन वैधेय इत्यत्र वि-पूर्व्वस्य धा-धातोः सुलक्षण-कि-प्रत्यये आतो लोप इटि चे (६ । ४ । ६४) त्याकार-लोपः । इतश्चानिञ (४ । १ । १२२) इति ढक्ञ्लक्षणे टकि प्रत्ययविधौ न स्थानिवत् । पटयतीति पटुं करोतीति णिचि इष्टवद्भावेन टिलोपे स्थानिवद्भावादत उपधाया (७ । २ । ११) इति न वृद्धिः । प्रातिपदिकादेव णिजिति पक्षे सुबन्तात् णिजिति पक्षेऽपि नपदान्तेति (१ । १ । ५८) निषेधस्य न विषयो ह्यत्रे रपदान्त-विधित्वात् । क्विलुगुपधात्वेत्यादि रिति वक्ष्यमाणेन मतविशेषेण उपधात्वे स्थानिवत्त्वं नेति च न निषेध. । तस्य लुक्साहचर्य्येण प्रत्ययविधिविषयत्वात् । तथाच स्तुहि-स्तडीति (३ । २ । १५८) निर्द्देशो णिचि लघूपध-गुणो (७ । ३ । ८६) न भवति । कथीति न अत उपधाया (७ । २ । ११६) वृद्धिः पूर्व्वस्य इत्युक्तेऽपि विधावितिं लभ्यते । किं विधि ग्रहणेन ? उच्यते, पूर्व्वस्मात् विधिः पूर्व्वविधिरिति पञ्चमी-समासस्यापि परिग्रहो यथास्यात् । तेन मथितं पण्यमस्य माथितिक इत्य त्राकार-लोपस्य स्थानिवत्त्वात् इसुसुक्तान्तात् क (७ । ३ । ५१) इति इकादेशस्य स्थानिवद्भावेन ठस्य कादेशो (७ । ३ । ५०) न भवतीति सुक्तमिदम् । ठस्य वर्णमात्रस्य ग्रहणादनल्विधा विति निषेधे कुत इकस्य कादेशप्रसङ्गः ? तर्हि वेभिदितेत्यत्र यङोऽकारलोपस्य स्थानिवत्त्वादेकाच (७ । २ । १०) इति इट् प्रतिषेधो न भवतीति । नैवम् । एकाच इति विहित-विशेषण

पक्षाश्रयणेनैव सिद्धेः । तस्मादयुक्त एवैष पूर्व्वस्माद्विधिरिति पक्षः । अन्यथा वैधेय इत्यत्र ढ्रचः प्रातिपदिकात् प्रत्ययविधिरिति स्थानिवत्त्वे ढ्रज्लक्षणः प्रत्ययो न स्यात् । तथाहि गौरित्यत्र सत्तायामपि वृद्धौ एङ् ह्रस्वात् सम्बुद्धे रिति (६ । १ । ६८) सुलोपे कर्त्तव्ये स्थानिवत्त्वं स्यात् । ननु पयोऽठ-मित्यत्र पूर्व्वस्माद्विधिरिति मते णिलोपस्य स्थानिवत्त्वा दभ्यस्ता-दिति (३ । ४ । १०८) झेर्जुस् न भवतीति स्थितम् । तस्य समासस्यापरिग्रहे च कथं सिजभ्यस्तेति (३ । ४ । १०९) न जुस् । भ्रान्तोऽसि । असत्यपि णिलोपस्य स्थानिवत्त्व चडोऽका-रेण व्यवधानात् यद्येवं पूर्व्वस्येत्यस्तु किं विधिग्रहणेन ? सत्यम् । विधिग्रहण मधिकविधानार्थम् । यत्र पूर्व्वस्य यथाकथञ्चि द्विधि स्तत्रापि स्थानिवदिति तस्मात्स्यत स्थानिवद्भावा दिङ्-विधि र्न भवति । अत्रापि आयन्तौ टित् किताविति (१ । १ । ४६) इटो विधेयं पूर्व्वम् । अथ वैयाकरणः सौवश्च इत्यादौ यणः स्थानिवत्त्वे अपि आयावादेशौ कथं न भवत इति चेत्, न । वैयाकरणाख्यायां (६ । ३ । ७) ह्रैच वैयाघ्रादिनि ४ । २ । १२) च सामान्यनिर्द्देशात् तत् सिद्धम् । "असिद्धं बहिरङ्ग" इति अन्तरङ्गे आयादौ कर्त्तव्ये बहिरङ्गत्वा देवा-सिद्ध इति वा । नन्वत्र यकार-वकारयोः कृतयोरेव ऐच् प्राप्तिः । तथाच आदिष्टादचः पूर्व्वत्वा च स्थानिवदिति कथं नोच्यते ? उक्तं हि भाष्ये "योऽनादिष्टादचः पूर्व्वस्तस्य विधिं

प्रति स्थानिवदिति" । सत्यम् । नहि तत् सूत्रकारीयम् । न पदान्तेत्यत्र (१ । १ । ५८) परसवर्णग्रहणात् शिण्ढीत्यत्र अनुस्वारस्य ययिपरसवर्णौ (८ । ४ । ५८) लोपाजादेशात् पर एव न पूर्व्व इति प्राप्तिरेव नास्ति । किं सवर्णविधौ निषेधेन ? एवं सति अचीकरदित्यादौ परत्वादुपधा-ह्रस्वत्वे द्विर्व्वचनमिति सन्वत्वं न प्राप्नोति । उपधा-ह्रस्वत्वस्य स्थानिवत्वे अलघुपरत्वात् । सत्यम् । अत् स्मृदत्वरे (७ । ४ । ९५) त्वकारविधानात् सन्वत्वे स्थानिवत्त्वम् । नेति । तत्र व्याख्यानात्, प्रपञ्चस्त्वन्यत्र । अवधीदिति हन्तेर्लुङि चेति (२ । ४ । ४३) अदन्तो वधादेशः । वधसम्बन्धिनोऽकारस्यार्द्धधातुक इति परसप्तम्या अतो लोपे तस्य स्थानिवत्वेन अतो हलादेर्लघो रिति (७ । २ । ७) न वृद्धि स्तत्र हलन्तस्येत्यनुवृत्तेः अनेकवर्णव्यवधानाद्वा । हरिराचार्यस्तु पूर्व्वसूत्रे विधिग्रहणादलाश्रयो विधि रल्विधि रित्युत्तरपदलोपिसमासाश्रयणा दलाश्रय एव विधौ प्रतिषेधः । पटयतीत्यत्र च अलभावाश्रयाद्धलि स्तः पूर्व्वेण नाप्राप्तिः । वर्षाभावकृतं दुर्भिक्षं वर्षाकृत मुच्यते । तद्वदलभावाश्रय-विधि रल्विधि रिति मतेः विधि रित्युक्तवान् ।

न पदान्तद्विर्व्वचनवरेयलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्-च्विधिषु ॥ ५८ ॥

एषु विधिष्वजादेशः स्थानिव न्न भवति । पदान्ते कौस्तः आवादेशः स्यात् । द्विर्वचने दृश्यत्र अनचि चेति (८ । ४ । ४७) द्विर्वचनं न स्यात् । वरच्यतो लोपे याथावरः आतो लोप इटि चेति (६ । ४ । ६४) स्यात् । सवर्णविधौ असोरल्लोपः (६ । ४ । १११) । शिंषिठ पिंषिठ अनुस्वारस्य ययि पर सवर्णो (८ । ४ । ५८) न स्यात् । अनुस्वारे शिंषन्ति पिषन्ति न लापदान्तस्य झलि (८ । ३ । २४) इत्यनुस्वारो न स्यात् । जश्‌विधौ अभ्यस्तस्याकारलोपः धद्धे धद्ध जश्त्वं न स्यात् । चर्विधौ गमहनेत्युपधालोपः (६ । ४ । ९८) जक्षतुः जक्षुः खरि चेति (८ । ४ । ५५) चर्त्वं न स्यात् । अतः स्थानिवत्त्वं निषिध्यते । स्वर-दीर्घ-यलोपेषु लोपाजादेशो न स्थानिवत् । तत्रेह स्वरो नोदाह्रियते । दीर्घविधौ अल्लोपोऽनः (६ । ४ । १३४) प्रतिदीव्ना हलि चेति (८ । २ । ७७) दीर्घो न स्यात् । यलोपे क्ङिच्यतो लोपः (६ । ४ । ४८) कण्डूतिः वलि (६ । १ । ६६) यल्लोपो नस्यात् । लोपः किम् ?

वायोः यणादेशः स्थानिवदेव ततो वलि (६ । १ । ६६) लोपो न भवति । क्विलुगुपधात्व चङ्परणि (७ । ४ । १) ह्रस्व-षत्व-कुत्वेषु न स्थानिवत् । लावयतेः क्विप् लौः क्वौ लुप्तं न स्थानिवदिति णिलोपस्य स्थानिवत्त्वनिषेधादूठ् । लुकि आमलकं फलं नित्यं वृद्धशरादिभ्यश्चेति (४ । ३ । १४४) मयट्, फले लुकि (४ । ३ । १६३) लुक्, तद्धितलुकीति (१ । २ । ४९) स्त्री प्रत्यय-निवृत्तौ तस्य स्थानिवत्त्व-निषेधात् यस्येति चेति (६ । ४ । १४८) लोपो न भवति । उपधात्वे पारिखीयं चातुरर्थिकाणन्ताद्यस्येति चेति (६ । ४ । १४८) लोपस्य स्थानिवत्त्वात् खोपधाच्छः (४ । २ । १४१)। चङ्परे णिज् ह्रस्वे (७ । ४ । १) अवीवदद्वीणां परिवादकेन । प्रथमस्य णिचोऽस्थानिवत्त्वात् णौ चङीति (७ । ४ । १) ह्रस्वः । (एवं) पापच्यतेः पापक्तिः । पाचयतेः पाक्तिः । यायज्यते यायष्टिः । याजयते याष्टिः । यल्लोप-णिलोपयोः स्थानिवत्त्व-निषेधाज्झलीति कुत्व-(८ । २ । ३०) षत्वे (८ । २ । ३६) भवतः ।

'न'। पदेऽन्तः पदान्त इति सप्तमीसमासः । तेन वेतस-, शब्दात् ड्मतुपि डिति टिलोपे अकार-लोपस्य स्थानिवत्त्वात् भत्वं न भवति । न ह्ययं पदेऽन्तो ड्मतुपोऽपदत्वात् तद्विधौ स्थानिवदेव । कौस्त इत्यत्र तु स्त इति पदे क्विबन्तस्यान्तस्य विधिरिति न स्थानिवत् । स्त इति अस्तेस्तम् । सार्वधातुकमपित् ङिदिति (१ । २ । ४) ङित्वे श्नसोरल्लोपः (६ । ४ । १११) स्थानिवन्न भवति । पदसंस्कारप्रयुक्तत्वा इत्याकरपक्षस्य स्त इत्यादिकं पदान्तरनिरपेक्षमेव संस्क्रियते । तत्पक्षानादिष्टादच इति न सम्भवतीति न वाच्यम् । युष्मद्युपपदे (१ । ४ । १०५) इति प्रणयनाद्वाक्य-संस्कार प्रयुक्तमप्यस्ति । द्विर्वचनं नन्यादिति अनचिचेत्व (८ । ४ । ४७) नेन । वरे इति सप्तम्यन्तं सौत्रत्वादलुक् । केचित्तु ईकार-प्रश्लेषेण ईविधिं प्रति न स्थानिवत् । तथा आमलक्या फलं आमलकं इत्यत्र ङीपो स्थानिवत्त्वात् यस्येति चेति (६ । ४ । १४८) लोपो न भवति । पटयतीतिवत् यद्बाधकं पौर्वापर्यमित्याहुः । यायावर इति यातेः यङन्ताद् यश्च यङ इति (३ । २ । १७६) वरचि कृते अत्र अतोलोप (६ । ४ । ४८) इति अल्लोपे स्थानिवत् । आतो लोपः (६ । ४ । ६४) स्यादिति अवहि टोडो युडविक्ङितोत्यतो (६ । ४ । ६३) ऽचीत्यनुवर्तते । अतोऽकारे अवयवेऽपि क्ङिति आतो लोपः स्यात् । ननु सामान्यातिदेशे विशेषातिदेशा दार्धधातुकत्वं अजादित्वं विशेषो कथ मवयवे स्याताम् ?

उच्यते, इदमेव वरे-पदं ज्ञापकं, क्वचिद्विशेषोऽप्यतिदिश्यत इति, तेन आवधिष्टेत्यत्र अङ् इन् सम्बन्धादात्मनेपदं स्यादेव। समुदाय कार्य्य मवयवे चेति अतोऽङ्गत्वमस्त्येव। नेड्वशि कृती (७।२।८) तीट् निषेधः। 'स्वरदीर्घेति' वक्ष्यमाणत्वात्अल्लोप-मुल्लङ्घ्याह 'सवर्णविधाविति'। 'पिष्टोत्यादि' पिष्ट्ट विस-रणे, पिण्ल संचूर्णने, लोट् सिप् तस्य हि। श्नम् श्नसोरल्लोपः (६।४।१०१) ष्टुत्वं (८।४।४१) झलां जश् झशीति (८।४।५३) षकारस्य डकार। श्नसोरल्लोपः (६।४।१११) नश्चे (८।३।२४) त्यनुस्वारः, अत्रापि न स्थानिवत्त्व अनु-स्वारग्रहणात्, स्थानिवत्त्वनिषेधात् परसवर्णो णकारः। न चादि-ष्टादच' पूर्व्वत्वमिति वाच्यम् * ? स्थानि अकारस्थानादिष्टाजपेक्ष पूर्व्वत्वस्य स्थानिवद्भावेनाश्रयणात्। परसवर्ण निर्म्मुक्त मनुस्वार विधि माह 'शिंषन्तीति'। अन्यथा नाल्लगीयकत्वात् † पर-सवर्ण-विधौ स्थानिवद्भावे प्रतिषिद्धे अनुस्वार-विधावपि सम्भा-व्येत। दीर्घौ वक्ष्यत इति जश्विधिमाह। श्नाभ्यस्तयो रात इति (६।४।११२) आकारलोपः। 'धद्ध' इति। धाञो लट् शपः श्लुः द्वित्वं झलः दधस्तथोश्चेति (८।२। ३८) अभ्यासस्य धत्वं जश्त्वमिति प्रकृति-धकारस्य झलाञ्जश्झशीति

---

* अकारस्य पूर्व्वत्वं इति टिप्पनी।

† अविनाभावित्वात् इत्यथ।

(८।४।५३)। 'जक्षतुरिति'। अदे लिंट्यन्यतरस्यामिति (२।४।४०) घस्लृ-उपधालोपः तस्य स्थानिवत्त्वनिषेधात् घकारस्य चर्त्वं ककारः शासिवसीति (८।३।६०) षत्वं स्थानिवद्भावाद्दसो द्विर्वचनम्। अनुः स्थानिवद्भावो निषिध्यत इति सर्व्वत्र वाक्यशेषः। 'प्रतिदीव्नेति'। गुहविभक्त्यादिना (उः १६३। दिवेरौणादिकः कनिन् तनसृतीयैकवचनं तत्र भले अल्लोपोऽन (६।४।१३४) इत्यकारलोपस्य स्थानिवत्त्वे दीर्घो न स्यात्। अतः स्थानिवत्त्वाभावे हलि चेति (८।२।७७) दीर्घः स्यादेव। नचात्र न भकुर्च्छुरा मिति (८।२।७९) निषेधे स्थानिवत्त्व-निषेध-सामर्थ्यां दीर्घत्वमिति वाच्यम्। स्थानिवद्भावनिषेधस्य पिपतोरित्यत्र सत्वत्वात् क्विपि अतो लोपे कृते चास्थानिवत्त्वा द्रेफान्तस्य दीर्घत्वेन अर्थवत्वात् तत्र स्वोरित्युतइति रेफवकारान्तस्य भस्य तद्दीर्घत्वं प्रतिषिध्यते। 'कण्डूतिरिति, कण्ड्वादिभ्यो यक् (३।१।२७) ततः क्तिच् क्तौ च संज्ञायामिति (३।३।१७४) क्तिचि योऽतोऽकारलोप स्तस्य स्थानिवत्त्वनिषेधाल्लोपो व्योरिति (६।१।६६) यलोपः। ननु लोलुव इत्यादावपि अल्लोपस्य (६।४।१३४) स्थानिवद्भावादेव गुणवृद्धी न भविष्यत इति किं न धातुलोप (१।१।४) इति सूत्रेण? नैवम्। तत्र हि यङोऽचिचेति (२।४।७४) विशेष विधानात् लुका अतोलोपो बाध्यते इति तत्वबोधम्। "सर्व्वविधिभ्यो लुग्विधि र्बलवानिति"। 'यायावर' इत्यनेनैवा-

वगतेः कण्डूति रिति प्रपञ्चार्थोदाहरणान्तरम्। लोपः क्वि-मिति। लोपाजादेश इत्यवस्थः क्विलुगित्यादि वार्त्तिकं यद्यपि महावृत्तौ नास्ति तथापि मपर्य्यन्तस्य (७। २। ९१) त्यत्र वामनवृत्तौ स्वीकृतं इति व्याचष्टे क्विप् लुक्चेत्यादिकं वाक्यम्। एतच्च योगविभागादेव धार्य्यम्। यत्प्रणाल्याकारेणोक्तं वैली-कारप्रश्लेषं नेच्छन्ति परे इत्यत्र, ते आमलक्याः फलं विकारः आमलक मित्येतदर्थं योगविभागं कुर्व्वन्तीति। तदुपलक्षणं 'क्वौ लुप्त मिति'। अत्र द्वैतम्। यत् क्वौ लुप्तं तत् क्वि-निबन्धकार्य्ये कर्त्तव्ये न स्थानिवत्। णिच्य णेरनिटीत्यनेन (६। ४। ५१) क्वावेव लुप्त.। क्विनिबन्धे ऊठि कर्त्तव्ये न स्थानि-वदिति ऊऽ लोरिति एत्येधत्यूठ् स्विति (६। १। ८९) वृद्धिः। यदन्यत्र लुप्तं तदपि क्वि-निबन्धकार्य्ये कर्त्तव्ये न स्थानिवदिति। देवमाचष्टे इति क्विपि टिलोपेऽपि क्वावूठ् स्यादेव। द्यूरिति धातुवृत्तौ, द्वयमेवैतत् सम्भवति। तथाप्याद्यं पक्षमाश्रित्य द्वितीयः पक्षो न व्याख्यात इत्यसर्व्वसम्मतत्वमस्य। लुक्कोत्यादि पूर्व्वं आमलक्या विकारः फलमिति नित्यं वृद्धेति मयट् (४। ३। १४४) तस्य फले लुगिति (४। ३। १६३) लुकि यस्येति चेति (६। ४। १४८) लोपो न भवतीति। यद्यपि स्त्री-प्रत्यये परे यः पूर्व्वः स लुप्त आसीत् तथापि "निमित्तापाये नैमित्ति-कस्याप्यपायः" इति वचनात् गौरादिङीषो (४। १। ४१) निवृत्तौ लोपोऽपि मवलित इत्येवोर्ज्जितोऽकारः। अयञ्च उपजात-

निमित्तो ह्युपसर्ग उपजनिष्यमाण-निमित्तेनापवादेन बाध्यत इति । यत्र तद्धितलुकि स्त्रीप्रत्ययस्य लुकः सम्भावना तत्र पूर्वमपि यस्येतिचेति (६ । ४ । १४८) लोपो न भवतीति उक्तमन्यत्र । खोपधाच्छ (४ । २ । १४१) इति शैषिकः परिखायां भवः पारिखः भदूरभव चेत्यण् (४ । २ । ७०) परिखा शब्दस्याकारलोपः । परिखस्येदं वृद्धादकेकान्तखोपधादिति (४ । २ । १४१) पारिखशब्दाच्छ इष्यते । स न प्राप्नोति खकारस्याल्लोपोऽल्लोपात् पूर्व्व (१ । १ । ६५) इत्युपधासंज्ञायां तदाकार लोपस्य स्थानिवत्त्वे न स्यादिति उपधात्वे स्थानिवत्त्वं नेति । चङ्परे णौ ह्रस्वो (७ । ४ । १) ह्रस्वस्य विधानम् । तत्र वादितवन्त प्रयोजितवान् इति हेतुमन्ण्यन्तान्णिचि अवीवददिति रूपम् । 'पापक्तिरिति' पचे यङन्तात् क्तिच् क्तिचावादिभ्य (३ । ३ । ८४ वा) इति वा । एवं पास्ति-याष्टी इति एयन्तात् कुत्वं चोः कुरिति (८ । २ । ३०) षत्वं व्रश्चभ्रस्जेति (८ । २ । ३६) तयो र्झलो झलीत्यतो (८ । २ । २६) झलीत्यनुवृत्तेः । अत्रापि सूत्रे विधिशब्दो भावसाधनः कर्मसाधनश्च तन्त्रेणानुवृत्त्या उपात्तः तेन यथागमतया सुदेशावसरः ।

द्विर्वचनेऽचि ॥ ५९ ॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिरूपेण भवति । क्वचिद्विर्वचन एव कर्त्तव्ये । कृते द्वि-

र्व्वचने पुनरादेश रूपं नटवद्गृह्णातीति। पपतुः पपुः, जग्मतुः जग्मुः। अतो लोपस्य (६।४।४८) गमहनेत्युपधालोपस्य च स्थानिवत्त्वादेकाचो द्विर्व्वचनं सिद्ध्यति। निनाय लुलाव, आयावोः स्थानिवत्त्वात् नेलौ शब्दौ द्विरुच्येते। अचि किम्? जेघ्रीयते, यङोत्वं न स्थानिवत्। उक्तः स्थानिवद्भावः।

'द्वि'। कार्य्यस्य प्राधान्यात् प्रकरणं कार्य्यातिदेशार्थम्। इदन्तु रूपातिदेशार्थं अज्ग्रहणात्। कार्य्यातिदेशे हि जेघ्रीयत इति ईत्व (७।४।३१) कृतेऽपि द्विर्व्वचनं भवेदेव, रूपातिदेशे हि घ्रा-रूपेण यथा न द्विर्व्वचनं स्यात् तदर्थमचीति क्रियत इति। रूपातिदेशस्य ज्ञापकमिदमेव। द्विर्व्वचने कर्त्तव्ये सति अचि परतो योऽजादेशः स स्थानिरूपः स्यात्। एवञ्च दिवेः सनि दुद्यूषतीत्यत्र यणादेशस्य स्थानिवद्भावेन द्विर्व्वचने अभ्यासे उकार श्रवणं न स्यात्। * तस्मात् प्रत्यासत्त्या द्विर्व्वचननिमित्तेऽचि योऽजादेशः स स्थानिरूपेणावतिष्ठते इति व्याख्येयम्। एवमपि गोद इत्यादौ चरितार्थ आतो लोपः पपतुरित्यादौ न स्यात्, द्विर्व्वचन निमित्तेऽचि प्राप्नुवन् अजादेशः स्थानिरूपेणावतिष्ठते इति व्याख्यानादतो जिघ्रासते कथि ?

६८। शसि शस्। (शसि ७। शस्।१।)।

वेः शस् वा स्यात् शसि परे। हरिश्शेते हरिःशेते, सन्तप्पट् सन्तःपट्, शिवस्सेव्यः शिवःसेव्यः।

पठ, अयशब्दात् परदस्येति निवृत्तं, तेन परमसर्पिष्कुरु परमयजुष्पठ इत्यपि। क्रियान्वये किं, परमसर्पिः कुण्डम्।

द्विस्त्रिचतुरित्येषां कखपफेषु वेः सो वा स्यात् वारेऽर्थे। द्विष्करोति त्रिष्खादति चतुष्पठति। पक्षे द्विः करोति इत्यादि। वक्तात्वोऽर्थे किं, चतुष्कपालमिति पूर्व्वेण नित्यम्।

अयानन्तरं व्यवर्जस्य सस्य वेः कादौ नित्यं सः स्यात्। कस्येदमयः अयस्कं, आत्मनः पयइच्छति पयस्काम्यति, पयस्कल्पं, धनुष्पाश इत्यादि। अव्ययस्येति किं, अधःकं, स्वःपाशः।

रेफस्य वेः काम्यभिन्ने कादौ सः स्यात्। गीष्कं, गीष्कल्पः, धूष्पाश इत्यादि। काम्येतु गीःकाम्यति। अव्येति किं स्वःकल्पं। अयस्काण्डादेराकृतिगणत्वात्—

आभीक्ष्ण्ये कः कः इत्यर्थे कस्कः, एवं कुतः कुत आगतः कौतस्कुतः। क्रिवन्तः सद्यःक्रीस्तत्र भवः क्रतुः साद्यस्कः, सद्यस्कारः, मुहुस्कार इत्यन्यः। अयस्काण्डो लौहभेद इत्यादि।

इकः परस्य वेः सस्य षः स्यात्। प्रयोगा यथास्थाने दर्शिताः। (१)

६८। शसि। शस् प्रत्याहारः। हरिश्शेते इति से कृते सिद्धे

(१) क्वचित् पुस्तके अत्र "चतुष्कपालमित्यादौ वेः से द्वान्तत्वात् षत्वाभावे इकः स' ष इत्युक्त"मित्यधिक' पाठ।

६९। कख-पफयो र्मूर्न्यो ।

( कख-पफयोः ७॥, मूर्न्यौ १॥ ) ।

वेर्मूर्न्यौ क्रमात् वा स्यातां कख-पफयोः परयोः ।

हरि+काम्यः हरिः काम्यः, मणे+खनिः मणेः खनिः, कृष्ण॥पाता कृष्णः पाता, भक्ति॥फलति भक्तिः फलति ।

७० । अतोऽहव्युः । (अतः ५।, अत्-हवि ७।, उः१।)।

अकारात् परस्य वेरुकारः स्यात् अकारे हवि च परे ।

शिवोऽर्च्यः, शिवोवन्द्यः ।

---

सन्तष्पट् इत्यादौ अपीतिवर्ज्जनात् पत्वार्थं असुविधानमिति, तेन श-ष से श-ष-साः स्युरित्यर्थः । खपान्ते शसि लुब्वा । खपान्ते शसि परे वे लुप् वा स्यात् । कश्चीतति कश्चीवति कस्तौति । पचि कः श्चोतति इत्यादि ।

६९ । कख । कश्च खश्च तत्, पश्च फश्च तत्, पश्चात् कखश्च पफश्च ते तयोः । मण्डूकगत्या अशसन्त इत्यनुवर्त्तते, तेन वासः क्षौमं, कः प्सातिं इत्यादौ मूर्न्यौ न स्यातां । वाशब्दस्य व्यवस्था-वाचित्वात् ख्याधौ न स्यात्, तेन शिवःख्यात इत्यादि ।

७० । अतः । हव् प्रत्याहारः परवकारेण। अपोऽक् समौ णे ऋक्चेति ज्ञापकात् सूत्रनिर्द्देशाच्च (१) शिवोऽर्च्य इति वेरुत्वे अता सहादौ गुः, पश्चादकारलोपः ; अन्यथा उकारस्य वः स्यात् (२) ।

(१) सूत्रनिर्द्देशात् अतोऽहव्युरिति सूत्रे अतोऽत् इति निर्द्देशात् ।

(२) अत्र अयमन्त इत्यस्यानुवृत्तिर्नास्ति, अनिष्टत्वात्, तेन रामोऽश्नातीति स्याद्वैवेति दुर्गादासः ।

७१ । अ-भो-भगोऽघोभ्योऽवे लुप् ।

( अ भो भगोऽघोभ्यः ५।३, अवे ७।, लुप् ।१।) ।

अवर्णात् भो भगो अघोभ्यश्च परस्य वेर्लुप् स्यात् अवे परे । रुद्रा नमस्याः, भो हरे, भगो रक्ष, अघो यज ।

७२ । य वाचि । (य ।१।, वा ।१।, अचि ७।)।

अवर्णात् भो भगो अघोभ्यश्च परस्य वे यो वा स्यादचि परे । शिवयुग्रः शिवउग्रः भोयच्युत भो अच्युत ।

---

७१ । अभो । भो भगो अघो इति सम्बोधनस्यैकदेशानुकरणम् (१) । परसूत्रसापेक्षत्वात् इहाचि नोदाहृतम् । अवप्रत्याहारः परवकारेण इत्याह रुद्रा नमस्या इति । नमस्या इति नमःशब्दात् नमस्तपोवरिव इत्यादिना क्यः, नमस्यः, तस्य धुसंज्ञा, ततस्तव्यानीयया इति ढे यः, पश्चाद्धसालोप इत्यकारलोपे, लोपो वा य-समभसे हसात् य समभसस्येति वा यलोपः, ततो लिङ्गसंज्ञाया स्याद्युत्पत्तिः ।

७२ । यवा । शिव उग्रइति वेर्लुपि न सन्धिः । यइत्यस्य ईषत्स्पृष्टता सिद्धैव, ईषत्पृष्टतरो योऽनेन विधीयते । वाशब्दस्य व्यवस्थावाचित्वात् अवर्णादचि य्वौ दान्तौ वा लघुप्रयत्नतरावपि स्यातां, तेन तयार्थ्याः तयार्थ्याः, लुप्पचे त आर्थ्या. । पटवेहि पटवेहि पटएहि । लघुप्रयत्नता हि उच्चारणस्थानशैथिल्यम् (२) ।

---

(१) भो भगो अघोरित्येषा विसर्गं विहायेत्यर्थः ।

(२) शैथिल्य मन्दप्रयत्नता ।

७३ । रिचो ऽवे । (र ।१।, इचः ५।, अवे ७) ।

इचः परस्य वे रेफः स्यादवे परे । हरिरयं, चतुर्भुजः ।

७४ । रोऽचः । (रः ६।, अचः ५। ) ।

अचः परस्य रेफस्य वे रेफः स्यादवे परे । भ्रातरव, धातर्गच्छ ।

७५ । खपि वा । (खपि ७, वा ।१। ) ।

अचः परस्य रेफस्य वे रेफः स्याद्वा खपि परे । गीर्पतिः गीष्पतिः गीःपतिः ।

---

एवं उञि आत् न यः (१) तेन देवदत्ता उ एकविंशतिः, देवदत्त उ एकः, अथ नित्यं वेर्लुप् ।

७३ । रिचः । र इति लुप्तप्रथमं दं । स्वरूपभङ्गनिरासाय अनुकरणत्वाद् वा न विः, इच् प्रत्याहारस्तस्मात् । अत्रापि अव-प्रत्याहारः परवकारेण इत्याह चतुर्भुज इति, चत्वारो भुजा यस्य इति वाक्यम् । (२)

७४ । रो । र इति षोकान्तं दं । आद् इति कृते सिद्धे अज् ग्रहणं परार्थम् । (३)

७५ । खपि । खप् प्रत्याहारः । मण्डूकगत्या वे तु कखपफे वित्यतः म इत्यनुवर्त्तते, तेन इयं गीः पतिरसावित्यादौ न स्यात् ।

---

(१) उञि परे अवर्णात् परस्य वेर्वो न स्यात् ।

(२) चतुर्भुज इति सामान्यविशेषन्यायेन परत्वमस्योदाहरणं भवितुमुचितमिति मामङ्गबोधः, वाचिंगतविशेषाभावतया तत्पूर्वनिमित्तगतविशेषाभावादन्तरङ्गतया चतुर्भुजादिति केचित् ।

(३) अरपूर्वे अचोऽग्रहणं विना चतुर्णतिरित्याद्यसिद्धेरित्यर्थः ।

गीर्पतिरिति गिरां पतिरिति वाक्यम्। गीष्पतिरिति अयस्काण्डादेराकृतिगणत्वात् से तु कखपफे वेति वेः से, इकः सः षः इति षः। उभयत्वाभावपक्षे (१) गीःपतिः गीर्व्वाण इत्यादि। एवं अहर्पति अहस्पतिः अहᳶपतिः अहःपतिः, धूर्पतिः धूष्पतिः धूᳶपतिः धूःपति। यद्यपि सामान्येनोक्तं तथाप्यभिधानात् ज्ञेयम् (२)।

एकाधिकरणे प्रचेतसो राजसे। प्रचेतसो वेः रेफः स्यात् वा एकाधिकरणे राजन्निति शब्दे परे न तु से। हे प्रचेता राजन् हे प्रचेतो राजन्। एकाधिकरणे किं शुद्धधि प्रचेतो राजन् गच्छ। से तु प्रचेतोराजन् भोः (३)। नाम्नग्रहणात् शत्रन्ते (४) प्रचेतो राजन् गच्छ।

---

(१) खपि वेति से तु कखेष्वुभयोरप्राप्तिपक्षे इत्यर्थः।

(२) एतेन गिर् धुर् अहन् एषामेव विसर्गस्य पतिशब्दे परे एव स्यादिति ज्ञापितम्। अतएव वाचो पति गीःपाठ इत्यादौ न स्यादिति दुर्गादासः। गीष्पतिरित्यत्र "इद निपात्यमित्यन्ये" इत्यधिक पाठ। सन्धिप्रकारे तु सन्धिपादे १६५ सङ्ख्यक सूत्रे गीष्पतिरित्यसाधुरित्युक्तम्।

अमरटीकायां गीष्पतिशब्दे तु 'गिरः पति' षष्ठे च कस्कादित्वात् साधुरिति रघुनाथः। भरतस्तु 'गिरः पति' गीष्पति ष्टैव कखपफेवेति स मनीषादित्वात् षत्व, सभावपक्षे कखपफयोर्मूर्न्धाविति उपाध्मानीये गीᳶपतिरिति, तदभावपक्षे खपि वेति रेफे गीर्पति, तदभावपक्षे विसर्गस्य स्थितिरेव गीःपतिरिति। एव चातूर्ह्य चन्द्र क्षीरस्वामि वोपदेव सुभूत्यादीनां सम्मतमेव। अतएव गीष्पतिरित्यसाधुरिति कस्यचिद्वचनं न हृद्यमित्याहु।

(३) प्रचेता राजा यस्येति विग्रहः।

(४) शत्प्रत्ययान्ते राजधातौ परे न इत्यर्थः।

७६। **नाह्नो रकतौ।** (न ।१।, अह्नः ६।, रकतौ ७।)

अह्नो रेफस्य वे रेफो न स्यात् रेफे के तौ च परे।

अहोरात्रः अहस्करः, अहोभिः।

७७। **हस्येतत्तदोऽनञकः से र्लोपः।**

( हसि ७।, एतत्तदः ५।, अनञकः ५।, सेः ६।, लोपः १। )।

नञक्वर्जोदेतदस्तदश्च परस्य से र्वे र्लोपः स्यात् हसि परे।

एष कृष्णः, स विष्णुः। अनञकः किम्–असः शिवः, एषकोरुद्रः।

---

७६। नाह्नः। रश्च कश्च तौ तयोस्तस्मिन्, सौत्रत्वादगुण्। अत्र सामान्यशब्दस्य विशेषपरत्वात् रात्रिरूपरथन्तराणां (१) रेफेष्वेव, तेनाहारजमीत्यादौ निषेधो न स्यात्। अहोरात्र इति एकदेशविकृतमनन्यवद्भवतीति न्यायादिति परे। चन्द्रस्तु रेफ-मात्रे निषेधात् अहोरजमी अहोरमणीयमित्याह, अत उक्तं रेफ-इति (२)। ई सिल्लोपे च। अह्नः सिल्लोपे वेः रेफो न ई। दीर्घाह्नो घोषः कृष्णाह्नो हेमन्त इत्यादि। ई किं अत्यह-र्हेमन्तः। लोपग्रहणात् लुकि माभूत्—दीर्घाहर्षणम्।

७७। एष च स च तयोस्तस्मात्, नञ् च अक् च तौ, तौ न विद्येते यस्य तस्मात्। सेः किं एतेभ्यो गम्यते।

---

(१) रथन्तरं साम।

(२) [illegible]

७८। ढ्रोढ्रि घँश्चानुः।

( ढ्रः ६।, ढ्रि ७, घँः १।, च।१।, (अन्–ऋ) = अनुः ६। )।

ढकारस्य ढकारे परे, रेफस्य रेफे परे, लोपः स्यात्, पूर्व्वस्य च ऋवर्जस्य घँः। रूढ़ः, हरीरम्यः। अनुः किं—तृढ़ः।

इति वि-सन्धिपादः।

इति सन्ध्यध्यायः।

---

एपे च पादपूरणे। आभ्यां चेर्वें लोपः स्यात् पादपूरणे कर्त्तव्ये, एप इति प्रोक्तान्ते परे। यथा—

सैष दाशरथी रामः सैप राजा युधिष्ठिरः।

एपैप (१) रथमारुह्य मथुरां याति माधवः॥

पादपूरण इति किं, स एष चिणोति, स एष पृथिवीपालः पालयामास मेदिनीमिति। एपेति किं, स एव श्रीहरिः पाया-द्देवक्यानन्दवर्द्धनः।

७८। ढ्रो। ढच रच तसस्य, न ऋ अनृ तस्य। रूढ़ इति रुहो जन्यां क्त, होढ़, ढभात्तस्य धः, ष्टुभिरिति धस्य ढः, अनेन लोपघौं। तृढ़ इति तृहधू हिंसे, क्त, ऊदित्वादिमो-ऽभावे साधनं पूर्व्ववत्। वि-सन्धिपादः (२)। सन्ध्यध्याय इति—एकार्थावच्छिन्नः पादसमूहोऽध्यायः॥

---

(१) एषैष इति माधवविशेषणम्, सम्भ्रमे द्वित्वम्।

(२) अत्र कचित् पुस्तके श्लोकोऽयं दृश्यते—

२यः । अजन्ताध्यायः ।

## संज्ञा ।

७९ । लिः—सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् । (लिः ।१, सि—सुप् ।१॥ ) ।

स्यादीन्येकविंशतिर्लिः पराणि प्रयुज्यन्ते । ज श ट ङ पाः सि-ङस्योरिकारश्चेतः ।

८० । त्रिशः प्री द्वी वी ची पी घी सप्तः ।

( त्रिशः ।१॥, प्री—स्पः ।१॥ ) ।

स्यादीनि त्रीणि त्रीणि क्रमात् प्री द्वी वी ची पी घी सी-संज्ञानि स्युः ।

---

७९ । लिः । स्यादीनामेकविंशतिः प्रत्येकं दं, सीमत्वात् घेर्लुक् । ज श ट ङ पानां सि-ङस्योरिकारस्य चेत्त्वं चिह्नार्थम् । अनिर्दिष्टार्थत्वात् स्वार्थे भवन्ति स्यादय इति । स्यर्थसम्बुद्ध्यर्थे प्रीत्यादिना अर्थनियमः कार्य्यः, अनेन तु स्यादीन्येव विधीयन्ते, अतो नायं व्यर्थः ।

८० । त्रिशः । त्रीणि त्रीणि त्रिशः वीप्सार्थे शसम् । सप्त-

---

श्रीमद्वोपदेवसता वर्ष्यार्थसत्यादिना
अत्राध्याय एव विहितसत्यापदा टिप्पनी ।
सं[illegible]प्रकाशिनी
श्रीरामेण पाणिनिमते दासाय समन्दते ॥

८१। सम्बुद्धौ सि घिः।

( सम्बुद्धौ ७, सिः १, घिः १। )।

सम्बोधने विहितः सि घिसंज्ञः स्यात्।

८२। स्यमौजस् घिः।

( सि अम् औ जस् ।१॥।, घिः १। )

सि अम् औ जस् एते घिसंज्ञाः स्युः।

---

दीनां च–सः प्रीचेत्यादि। परे तु प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमीत्याहुः। ग्रन्थकृन्मते प्रथादेर्नदादि-पाठादीप्। अतएवाग्रे सदाऽनूक्तोऽसादिप्रथाः, क्रियान्तःकालाध्वनीय पीच इति स्त्रीलिङ्गनिर्देशः कृतः।

८१। सम्बुद्धौ। सम्बुद्धिः सम्बोधनं, चेतनाचेतनयोः स्थितयोराभिमुख्येऽभिधानं, तत्र विहितस्य सेरेव घिसंज्ञेत्यर्थः। एके तु वेकस्यादिना अचेतनस्यापीत्याहुः। सम्बुद्धिरिति परे।

८२। स्यमौ। सिश्च अम्च औश्च जस्च तत्। प्रथमौघि-रितिकृते सिद्धे स्यमौजस् इति कृतं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इति परिभाषाज्ञापनार्थम्, तेन सख्यावित्यत्र घौत्रिरिति न त्रिः स्यात् (१)। अम्जसोर्मध्ये पाठात् औकार-द्वयस्य ग्रहणम्, अन्यथा व्युत्क्रमनिर्देशो व्यर्थः स्यात्। सर्व्व-नामस्थानमिति परे।

---

(१) स्यादिपठितस्यैव औकारस्य घिसंज्ञा, तस्य मुख्यत्वात्, न तु यस्य कस्य-चित् स्थाने जातस्य, तस्य लाक्षणिकत्वात् इत्याशयः।

८३ । शिः क्लीवे । (शिः १।, क्लीवे ७।)।

नपुंसके शिरेव घि-संज्ञः स्यात् ।

८४ । दान्तवत् सभि । (दान्तवत् ।१।, सभि ७।)।

सभयोः परयो र्दान्तवत् कार्य्यं स्यात् ।

८५ । भौ लिध्वो र्हसभसोरन्ते च ।

(भौ ७।, लिध्वोः ६॥, हसभसोः ७॥, अन्ते ७।, च ।१।)।

भौ परे यत् कार्य्यं वक्ष्यते त-लेर्हसे धोर्भसे स्यात्, अन्ते चतयोः ।

---

८३ । शिः क्ली । शिरेवेति एवकारेण शिभिन्ना व्यवच्छिद्यन्ते, तेन वारिणी इत्यादौ नमव्मह्व इति न घः ।

८४ । दान्तवत् । अधिकारात् स्यादेरेव सभयोर्दान्तत्वातिदेशः, तेन पुम्भ्यां पुंभ्यामित्यादौ वा यम्, न तु रंस्यते मंस्यते इत्यादौ मनो र्नुनिषेधः ।

८५ । भौन्लिध्वोः । लेर्हसन्तं धोर्भसन्तं भिरित्यर्थः । लिधुभ्यां भसन्तं भिरिति कृते सिद्धे एतत्करणं, लेर्दान्ते धोर्दान्तादान्तयोर्भिकार्यज्ञापनार्थं, तेन कस्ताता गकस्ताता इत्यादौ न स्यादेरिति सकयोर्लोपः । अभ्राचीत्, आचीत्, अवोढ़ अवट्, अपक्, अधोक् इत्यादौ सकलोप-ढ-षड्-कड्-घाः स्युः । (१)

---

(१) कस्ताता इत्यत्र स त र इति त्रिभि र्वर्णैः संयोगः, तेषु रेफो भि', तस्मिन् परे स् इति संयोगस्य दान्तत्वाभावात् स्वादेः सोलोप इति न सलोपः । एवं गक् स्ताता इत्यत्रापि न सलोपः । अभ्राचीत्, आचीत् अवोढ़ एषु षरान्तरे इ

८६। हसोऽन्तः फः। (हसः १।, अन्तः १।, फः १।)।

हसो विरामश्च फसंज्ञः स्यात्।

८७। सर्व्व विश्व उभ उभय भवत् त्वत् त्वैक सम सिम नेमाः, अन्यान्यतरेतर डतर डतमाः, त्यद् तद् यद् एतदिदमदः किम् इस्मात् युष्मदः, पूर्व्वपरावर दक्षिणोत्तरापराधरान्तरस्वाः स्विः।

(सर्व्व—नेमाः १।।।, अन्य—डतमाः १।।।, त्यद्—युष्मदः १।।।, पूर्व्व—स्वाः १।।।, स्विः १।)।

---

८६। हसो। अन्तः परे वर्णाभावः। स च त्रिविधः—प्रागभावः प्रध्वंसोऽत्यन्ताभावश्च। इह तु प्रध्वंसात्यन्ताभावयोर्ग्रहणम्। तेन अवयः पयः रामः इत्यादौ स्नोर्विः। हस इति दभेदः स्यादिहस-ज्ञापनार्थः, तेन अस्तीत्यादौ न विः, वष्टि इत्यादौ न डः (१)। नोऽन्तः फः इति कृते दान्तातिदेशात् (२) पयोभ्यां राजभ्यां पुंभ्यां पञ्चानां इति सिद्धे हस्ग्रहणं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इत्यस्यानित्यत्व-ज्ञापनार्थं, तेन राजसः।

---

यथाक्रमं सकलोपः हश्च डश्च। अवट्, अवक्, अधोक् एषु दान्तत्वेऽपि भौ परे घट् कड घा. भवन्तीति।

(१) "हस इह स्यादेरेव, धोर्नी नः फत्वीत्यत्र फग्रहणेनैवेष्टसिद्धौ भयोः पृथग्ग्रहणा' दिति दुर्गादासः।

(२) भभयो परयोरिति शेषः।

। दभेदो गणभेदार्थः । एते पञ्चविंशत् शब्दाः स्त्रिसंज्ञाः स्युः ।

समो ऽतुल्ये, व्यवस्थायां पूर्व्वाद्यो ऽवान्तरो ऽपुरि ।
बहिर्योगोपसंव्याने, स्वस्त्वज्ञातिधनाभिधः ॥

८७ । सर्व्व । सर्व्वेय विश्वयेति च-सः (१) । त्वत्-त्वौ अन्यार्थवाचकौ । परे तु त्वच्छब्दं नाहुः (२) । डतर-डतमौ त्वौ, येन विधिस्तदन्तस्येति न्यायात् तदन्तानां ग्रहणम् । पृथगन्यतरस्य ग्रहणात् अन्यतमस्य न स्त्रिसंज्ञा, तेन अन्यतमाः अन्यतमायेत्यादि । भाष्ये तु अन्यतमस्यापि स्त्रिसंज्ञाविधानात् अन्यतमे अन्यतमस्मिन्निति । उभ-भवत्वतां स्त्रिसंज्ञाफलं(३)--उभयोः स्त्रियोर्धनं उभधनं, भवत्या धनं भवद्धनं, त्वतेत्यादि ।

समोऽतुल्ये इत्यादि । समं सर्व्वसमानयोरित्यमरः । सम-

(१) सिद्धान्तकौमुद्यां "उभयि सर्व्वनाम्न इह" (७ । १ । ५१) इति सूत्रस्य वृत्तौ उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्त इत्युक्तम् । गोयीचन्द्रोऽपि सुबन्तपादे १८२ ऽङ्क-सूत्रटीकायाम् "एकवचनबहुवचनविषयस्तु उभयशब्द" इत्याह । क्रमदीश्वरेण सुबन्तपादे "पूर्व्वाद्युभयो जसि वा" (१८७) इति सूत्रयित्वा उभयशब्दस्य जसि वा स्त्रिसंज्ञेत्युक्तम् । 'उभया उभिना इति तु कान्दसत्वाद्बोध्य'मिति तत्त्वबोधिनी । किम सर्व्वार्थं, नेम इत्यर्द्धे ।

(२) तत्त्वबोधिन्यान्तु "अयदेवोऽपि प्रयुङ्क्त—त्वदधरमधुरमधूनि पिबन्तमिति, त्वत्तोऽन्यस्य अधर इति विग्रहो न तु तवाधर इति . . . पूर्व्वाचार्येण चरा-मव्ययापत्ते"रित्युक्तम् ।

(३) येन तु सर्व्वा इत्यनेन उभशब्दात् सर्व्वा विभक्तय स्युरित्यपि फलम् । तथाच "उभौ हेतू उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति अन्यथा सर्व्वा हेतुमत्ते" इति

शब्दस्य सकलार्थे वर्त्तमानस्य स्निसंज्ञा न तु समानार्थे । अग्रे प्रयोगं वक्ष्यति नमः समस्मादिति ।

व्यवस्थायां पूर्व्वाद्य इति । दिग्देशकालवाचिता व्यवस्था, तस्यां पूर्व्वादयो नव स्निसंज्ञकाः, यदुक्तं—

पूर्व्वादयो व्यवस्थायां स्युः सर्व्वनामसंज्ञकाः ।
व्यवस्था कथिता लोके दिग्देशकालवाचिता ॥ इति ।

अन्यत्र दक्षिणाः प्रगायकाः प्रवीणा इत्यर्थः । उत्तराः कुरवः, पराः लोकाः श्रेष्ठा इत्यर्थः, अवराः कनिष्ठा इत्यादौ न गौणाख्या चेति न निषेधः (१) । एके तु स्वाभिधेयापेक्ष्यावधिनियमो व्यवस्था ; अवधिर्मर्य्यादा सीमेति यावत् ; तथाच स्वाभिधेयानां दिग्देशकालानां अपेक्ष्यः कारणत्वेनापेक्षणीयो योऽवधिनियमः स एव इत्याहुः ।

अन्तरान्तर इति । अत्र पूर्व्वादौ, न पूरपूस्तस्यां, वहिर्योगो वहिःसम्बन्धः वाह्य इति यावत्, उपसंवीयते अपिधीयते यत् तत् उपसंव्यानम्. ठेऽनट्, वहिर्योगिभिन्नं वस्तु केनचिदाच्छादितमिवोच्यते (२) । तथाच वहिर्योगोपसंव्यानयोर्वर्त्तमानोऽन्तरशब्दः पूर्भिन्नविषयः स्निसंज्ञ इत्यर्थः । अन्यत्र ब्रह्मशिवयोरन्तरे विष्णुः मध्ये इत्यर्थः ।

---

(१) किन्तु व्यवस्थावाचिताभावादेव इत्यर्थः ।

(२) केनचित्—वस्त्रान्तरेणेत्यर्थः । वस्त्रान्तरेणाच्छादितमधोवास उपसंव्यानमिति यावत् । एतच्च संक्षिप्तसारे सुबन्तपादे २८६ संख्यकसूत्रे "अन्तरे शाटका गुप्तपरिधानीया इत्यर्थः" इति ।

## ८८। न गौण्याख्याचत्रीसासे।

( न ।१।, गौण्याख्याचत्रीसासे ७।, )।

गौणत्वे, संज्ञायां, चे, त्रसाः से असे च, ते स्विसंज्ञा न स्युः।

## ८९। चे जसि वा। ( चे ७।, जसि ७।, वा ।१। )।

चे ते स्विसंज्ञा वा स्यु र्जसि परे।

---

स्वस्वित्यादि—ज्ञातिश्च धनञ्च ते, ते अभिधे यस्य सः, न सः अज्ञातिधनाभिधः, तथाच ज्ञातिधनवाचिस्वशब्दस्य न स्विसंज्ञा इत्यर्थः। यथा—स्वाय धनं ददाति, स्वाय यतते दरिद्रः। स्वस्मै ज्ञातये, स्वस्माद्धनादित्यत्र ज्ञातिधनयोः सामानाधिकरण्ये वर्त्तमानः स्वशब्दस्ते (१) नाभिधत्ते इति (२)।

८८। नगौ। सश्च असश्च तत् सासं, त्रसः सासं त्रीसासं, गुणस्य भावो गौण्यं, गौण्यञ्च आख्या च चश्च त्रीसासश्च तत् तस्मिन्। गौण्यमप्राधान्यं, त्रसः तृतीयासमासयोर्यथार्थं, ते पञ्चत्रिंशच्छब्दाः। प्रयोगा अपे अप्यस्ते—अतिसर्व्वायेत्यादयः।

८९। चे। पूर्व्वेण नित्यनिषेधे प्राप्ते विकल्पार्थमिदम्।

---

(१) ते ज्ञातिधने इत्यर्थः।

(२) "तथा परेषां युधि चेति पार्थिव" इति प्रयोगदर्शनात् "तथा पराणामपि परे मया" इति दर्शनाच्च अनुपलब्धत्वेऽपि अस्मदुक्त अर्थनामत्वम्। "इया इर्व्वाणमपि मेदिनीभृताम्" इति भारवदर्शनात् इवशब्दोऽप्यत्र गणे पठनीयः। तथाच श्रीपति—ज्ञातिना इवशब्दस्य गणे पठति, व्यभिचारात् प्रथमार्थद्विभार्या। तत्पदैकदेशात्—अर्व्वाक्शब्दविभाषया उभयत्रापि व्यापक इति। अविभक्तपदार्थ पठन्त्यस्मे, तेन अविषयतो विधि, प्रथमकाम् इति च प्रयोगा—इत्यादि भारत अनुपदइति ५६ संख्यकपाठे अविरामः।

९०। पूर्व्वाद्यल्प प्रथम चरम तयायार्द्धकतिपय-नेमाः (१॥)।

एते सप्तदश शब्दाः स्त्रिसंज्ञा वा सु जसि परे।

९१। तीयो ङिति। (तीयः १, ङिति ७)।

तीयान्तः शब्दः स्त्रिसंज्ञः स्याद्वा ङिति परे।

९२। पूर्व्वोऽन्त्यादुङ्।

(पूर्व्वः १, अन्त्यात्, ५, उङ्।१।)

अन्त्यात् वर्णात् पूर्व्वो वर्णः उङ्संज्ञः स्यात्।

९३। अन्त्याजादिष्टिः।

(अन्त्याजादिः १, टिः १।)

अन्त्यो योऽच् तदादिवर्णष्टि संज्ञः स्यात्।

---

वा दिगषे। दिग्वाचकानां द्वे स्थितानां स्त्रिसंज्ञा स्याद्वा। उत्तर-पूर्व्वयोर्दिशोरन्तरालं या दिक् सा तस्यै उत्तरपूर्व्वस्यै, उत्तर-पूर्व्वायै दिशे इत्यादौ दिग्वाचकाना वा स्त्रिसंज्ञेति।

९०। पूर्व्वा। सप्तदशेति पूर्व्वादयो नव, तयायौ त्यौ द्वौ, अन्ये षट्।

९१। तीयः। त्यस्य त्यसरूपेनानवस्थानादाह तीयान्त इति।

९२। पूर्व्व। अन्ते भवोऽन्त्यस्तस्मात्, दिगादित्वाद्यः। उङ्, उपधा इति परे।

९३। अन्त्या। अन्त्योऽच् आदिर्यस्य सः। अचां सन्नि-विष्टानां अन्त्यो योऽच् तदादिरित्यर्थः। यत्र तु अचः परो नास्ति

८४ । लुकि न तव । ( लुकि ७, न ।१।, तत्र ७ ) ।
लुगिति लोपे कृते यो लुप्तस्तस्मिन् परे यत् कार्य्यं तन्न स्यात् ।

८५ । स्वरादि-नि-चित्त्यं व्यम् ।
स्वरादि-नि-चित्त्यं १।, व्यं १। ) ।
स्वरादिर्गणो नियकारेतस्त्याय व्यसंज्ञाः स्युः ।

---

तत्रैकस्यैवान्त्याचो व्यपदेशिवदेकस्मिन् इति न्यायात् (१) व्यपदेशिवद्भावेन टित्व, तेन हरौ शम्भौ इत्यादौ इकारादेर्लोपः ।

८४ । लुकि । लुपधोः क्विप्, न्यङ्क्वादित्वात् (२) कङ्, लुक् पुंलिङ्गः । तत्रेति निमित्तसप्तमी, तथाच—लुक् शब्देन यस्य लोपः क्रियते तन्निमित्तकपूर्व्वकार्य्यं न स्यादित्यर्थः ।

८५ । स्वरादि । स्वरादिर्यस्य सः, च इद् यस्य चित्, चित्वासौ त्यश्चेति चित्त्यः पयात् चमः । स्वरादिर्यथा—

स्वर्नक्तं समया हृधा च निकषा सामि स्वयं निःषमं
स्वस्ति प्रादुरतीव भोरिव मना प्रायः शनैर्दुःषमम् ।
कं कामं ननु शं दिवा किल तिरोमिथ्या मिथः स्रः पुनः,
सायं नाम चिरं चिरेण सहसा दोषा विनोषा बहिः ॥

---

(१) अस्य व्याख्या ९८ श पत्रे (२) अस्य च टिप्पन्यां द्रष्टव्या ।

(२) न्यङ्क्वादिरयम् निपुणोदितधातोर्व्यवहारे यथा चात्र च तथात्राप्यदं । तथाच पाणिनीये "न्यङ्क्वादीनाञ्च" (७।३।५३) सूत्रं न्यङ्क्वादिगणः । तत् चानीतेनापि चकारोः कत्वोऽपि एतट्टीकायां "न्यङ्क्वादीनाञ्च । एवं चमो. कत्वं च" इति वार्त्तिकसूत्रं मतम् । न्यायोऽयमेव न तु सम्मतावे मयचतट्टीकायां "लुनिश्चम्यत्वं नाम न तु श्रुतं" लिखनाद्व सर्पनि सूत्रम् ।

अस्म्याहो अट् च चिराय अकटोम् जोषं चिरं कु प्रगे,
साचि द्राक् परमं मृषा खलु वरं ह्यः सुष्ठु दिष्ट्या चिरात् ।
नीचैरीषदये विहा यदि मनागर्वागभीक्ष्णं पृथक्
तूष्णीमा सपदि प्रसह्य झटिति प्याडङ्ग सद्यः ऋते ॥
अञ्जसा ननु च प्राध्वं युगपद्वत सम्प्रति ।
उच्चैरस्तं सनात्प्रातः समन्तात् बलवन्मुहुः ॥
प्रागन्तः साम्प्रतं स्थाने विष्वक् प्रभृति किञ्चिल ।
चिररात्राय धिङ्मङ्क्षु चिरस्य ह्यो ऋते शुभम् ॥
अद्धा ऋधुगमाह्नाय हिरुक् स्युः कुत-आदयः ।
तसन्ताद्यास्तथा प्रोक्ताः ज्ञेयं ज्ञेयं प्रयोगतः ॥ (१)

कुत-आदयः कुतः-क्व-कुहेत्यादि सूत्रे ये निपातितास्ते । तसन्ताद्याः तस् त्र दा र्हि दानीं थ्युस् स्तात् एन आ आहि आत् अस् एतदन्ताः । स्वरादिपठितानां वाचकत्वं,

---

(१) कारिकोक्ता अव्ययशब्दाः —

स्वर्, नक्तम्, समया, वृथा, च, निकषा, सामि, स्वयम्, नियमम्, स्वस्ति, प्रादुस्, अतीव, ओम्, इव, सना, प्रायस्, शनैस्, दुःषमम्, कम्, कामम्, मह, शम्, दिवा, किल, तिरस्, मिथ्या, मिथस्, अस्, पुनर्, सायम्, नाम, चिरम्, चिरेण, सहसा, दोषा, विना, उषा, बहिस्, अपि, आहो, अट् च, वत्, चिराय, अकट्, ओम्, जोषम्, चिरम्, कु, प्रगे, साचि द्राक्, परमम्, मृषा, खलु वरम्, ह्यस्, सुष्ठु, दिष्ट्या, चिरात्, नीचैस्, ईषत्, अये, विहा, यदि, मनाक् अर्वाक्, अभीक्ष्णम्, पृथक्, तूष्णीम्, आ, सपदि, प्रसह्य, झटिति, प्याट्, अङ्ग, सद्यस्, ऋते अञ्जसा, ननु, च, प्राध्वम्, युगपत्, वत, सम्प्रति, उच्चैस्, अस्तम्, सनात्, प्रातर्, समन्तात्, बलवत्, मुहुस्, प्राक्, अन्तर्, साम्प्रतम्, स्थाने, विष्वक्, प्रभृति, किञ्चिल, चिर-रात्राय, धिक्, मङ्क्षु, चिरस्य, ह्यो, ऋते, शुभम्, अद्धा, ऋधुक्, अमा, अह्नाय, हिरुक्, कुत-आदयः, तसन्ताद्याः ।

९६ । ह्रसोऽनन्तरः स्वः ।

( ह्रस: १।, अनन्तर: १।,स्व: १। )।

अचानन्तरितो ह्रसः स्व संज्ञः स्यात् ।

९७ । यूत् स्त्र्येव दी ।

( यूत् ।१।, स्त्री ।१।, एव ।१।, दी ।१। ) ।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ दीसंज्ञः स्यात् ।

---

चादीनां द्योतकत्वम्, अतएव चादि-स्वराद्योः पृथगुक्तिः । स्वरादि-राकृतिगणः । व्यं अव्ययमिति परे ।

९६ । ह्रसः । नास्त्यन्तरं यस्य सः । अचानन्तरित इति-मर्यादचेति लभ्यते, अनन्तरितः अव्यवहित इत्यर्थः । स्वः, संयोग इति परे ।

९७ । यूत् । ईश्च ऊश्च तौ, ताभ्यां तमित करोति, तेन ईदूच्च लभ्यते । येन विधिस्तदन्तस्येति न्यायादाह ईदूदन्त इति । एव शब्देनास्त्रीलिङ्गं व्यवच्छिद्यते (१) तेन (२) सेनान्ये स्त्रियै इत्यादौ न स्यात् । बहुप्रेयस्यै लक्ष्म्याय अतिलक्ष्म्यां राज्ञि इति अवयवस्त्रीत्वात् (३) सिद्धमिति भाष्यम् । ग्रन्थकृन्मते तु बहु-प्रेयस्यै अतिलक्ष्मी इति । दी, नदीति परे ।

---

(१) अस्त्रीलिङ्गं नित्यस्त्रीलिङ्गभिन्नं व्यवच्छिद्यते निराक्रियते । नित्यस्त्री-लिङ्गशब्दस्तु "यांश्चार्थं यद्रूपेण स्त्रीलिङ्गशब्दस्तद्विशेषार्थे तद्रूपेणैव यदि लिङ्गा-न्तरं न भजति तदा नित्यस्त्रीलिङ्गः । तेन गौरशब्दस्य पुंस्येऽपि गौरीशब्दस्य नित्यस्त्रीलिङ्गत्व'मिति दुर्गादासः ।

(२) तेन—सेनानीशब्दस्य नित्यस्त्रीलिङ्गभिन्नत्वेन ।

(३) अवयवस्त्रीत्वात् अवयवस्य प्रेयसीशब्दस्य लक्ष्मीशब्दस्य च नित्यस्त्रीलिङ्ग-

९८। नास्त्रीयुवः। (न ।१।, अस्त्री ।१।, इयुवः ६।)।

इयुव्स्थानावीदूतौ दीसंज्ञौ न स्तः, नतु स्त्री।

९९। वामि। (वा ।१।, आमि ७ )।

इयुव ईदूच दीसंज्ञो वा स्यादामि परे, नतु स्त्री।

१००। स्त्री युच्च ङिति।

( स्त्री ।१।, युत् ।१।, च ।१।, ङिति ७ )।

स्त्रीलिङ्ग इदुदन्तो नित्यस्त्रीलिङ्ग इयुव ईदूच दीसंज्ञः स्याद्वा ङिति परे, न तु स्त्री।

---

९८। नास्त्री। यूदित्यनुवर्त्तते। न स्त्री अस्त्री। इयुवस्थानाविति,—स्थानमस्ति ययोस्तौ, अर्श-आदित्वादः, स्थानौ; इयुवोः स्थानौ इयुव्स्थानौ, ईदूताविल्यस्य विशेषणम्। एतेन दीसंज्ञानिषेधात् हेश्रीः श्रियम् श्रिय इत्यादौ ध्यम्प्रसादेर्लोपो न स्यात्। अस्त्रीति किं—हे स्त्रि स्त्रीम् स्त्रीरित्यादि।

९९। वामि। इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते। अस्त्रीत्युक्तेः स्त्रीणामिति नित्यम्।

१००। स्त्री। चकारान्नित्यस्त्रीलिङ्ग इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते, इह पुनः स्त्रीग्रहणं पाक्षिकस्त्रीलिङ्गस्य इदुदन्तस्यापि प्राप्त्यर्थम्। तेन मत्यै मतये धेन्वै धेनवे सुमत्यै सुमतये

---

स्यात्। अत्र दुर्गादासः—'भाष्यकार-क्रमदीश्वरौ प्राक्तनाश्च नदीसंज्ञा यथात् पुंस्त्वयोगेऽपि न निवर्त्तत इति मन्यमानौ हे अतितन्त्रि प्रिय, हे बहुश्रेयसि कृष्ण, अतितन्त्र्यै विप्राय धन देहि, अतितन्त्र्यै राधे सखीत्युदाहरत' इति।

१०१। अध्यच्ताच्येप् पिः।

( अध्यच्ताच्येप्।१।, पिः १। )।

घिवर्जस्यादेरच् तसंज्ञावच्यकारावीप् च एते पि-संज्ञाः स्युः।

१०२। संख्यावड्डत्यतु-बहु-गणा नेपि।

( संख्यावत्।१।, डति-अतु-बहु-गणाः १।।।, न।१।, ईपि ७। )।

डत्यतु-बहु-गणानां सङ्ख्यावत् कार्य्यं स्यात् नत्वीपि।

---

सुधिन्वे सुधिनवे इत्यादि। इयुवस्थानयोरीदूतोस्तु नित्यस्त्रीलिङ्गयोरेव, तेन सुश्रिये स्त्रियै इत्यादौ न स्यात्। इयुव ईदूतोरपि पुंभिन्नान्यदार्थे भूरिश्रियै भूरिश्रिये भूरिभ्रुवै भूरिभ्रुवे स्त्रियै, भूरिश्रीणां भूरिश्रियां भूरिभ्रूणां भूरिभ्रुवां स्त्रीणामित्यादौ दीसंज्ञेति केचित्। वाग्रहस्य व्यवस्थया विगत इर्य्याभ्यस्ता वीः पश्च इत्यादौ ग्रसि दीसंज्ञा, न तु ङिति, तेन विगत इर्य्यस्यास्तस्यै व्ये।

१०१। अध्यच्। नवि रविस्तस्याच् अध्यच्, अश्च यश्च तौ अयौ, तौ च तौ अचौ चेति ताचौ, अध्यच ताचौ च ईप् च तत्। नञ्युक्तवन्न्यायादत्र (१) घिवर्जस्यादेरिति।

१०२। संख्या। संख्या इव संख्यावत्, डतीति त-त्यान्तस्य (२) ग्रहणं, तेन पतिरित्यस्य न ग्रहणम् (३)। अतुग्रहणेनात्वन्तस्य ग्रहणम्। बहुगणौ प्रचुरार्थौ। एतेषां संख्यातिदेशः कतिभः

---

(१) नञ्युक्तवन्न्यायात्—निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायादित्यर्थः।

(२) तत्यान्तस्य तद्धित डतिप्रत्ययान्तस्य।

(३) पतिशब्दस्य औणादिक डड्डतिप्रत्ययनिष्पन्नत्वात्।

## अजन्तपुंलिङ्ग-शब्दः ।

राम-स् इति स्थिते—

१०३ । स्रोर्विः फे । ( स्रोः ६॥, विः १।, फे ७। ) ।

सकाररेफयोर्विः स्यात् फे परे । रामः ।

औजसोः सन्धिः । रामौ रामाः ।

---

यतिशः यावच्छः तावच्छः बहुशः गणशः इत्यादिसिद्ध्यर्थः । ईपौति विपयस्तौ, तत्र निषेधात् यावतौ बह्वीत्यादि ।

इति श्रीरामतर्कवागीशकृता संज्ञापादटिप्पनी समाप्ता ।

---

१०३ । स्रोः । स च र च तत् स्र, सयुक्तोर स्र, स्रच स्रच तौ तयोः स्रोः ; तथाच सकारस्य रेफस्य सकाररेफस्य च विरित्यर्थः । तेन रामः गीः चतुरो वारान् भुङ्क्ते चतुरित्यादि । अतएव ग्रन्थकृता रात्सस्येति सूत्रं न कृतम् (१) । औजसोः सन्धिरिति निर्णावित्यर्थः ।

---

(१) रात्सस्य—(८।२।२४) रेफात् संयोगान्तस्य सस्यैव लोपो नान्यस्येति पाणिनीये । सुबन्तहिंसेरित्यस्य टीकायां "चतुरिति चतुर् शब्दात् सुच उत्पादितौ चतुर्स् इति स्थिते स्रोर्विः फे इति द्विवचननिर्देशात् एकशेषाद्वा रेफसकारयोः स्थाने एकएव विरित्युक्तं तर्कवागीशेन ।

अत्र दुर्गादासस्तु चतुरोवारान् इत्यर्थे चतुर्शब्दात् सुचि कृते रेफस्य विसर्गे प्राप्ते गस् इत्यत्र शब्दस्य व्यवस्थावाचित्वात् सुचि परे नित्यं विसर्गस्य सकारे स्थाने. धोलोप इति सस्य लोपे सुच- सस्य विसर्गे चतुरित्याह ।

१०४ । स्वदीभ्यां ध्यम्शसादेर्लोपः ।

( स्वदीभ्यां ५॥, धि-अम्-शसादेः ६।, लोपः १। ) ।
स्वात् दीसंज्ञकाच्च परस्य धेरम्शसादेश्च लोपः स्यात् ।
हे राम रामं रामौ ।

---

१०४ । स्वदी । स्वश्च दी च तौ ताभ्यां, अम् च शस् च तौ, तयोरादिः अम्शसादिः, धिश्च अम्शसादिश्च तत्तस्य, पुंस्त्वं सौत्रत्वात् । धातारं पितरमित्यादौ तु विप्रतिषेधे परं कार्य्यमिति(१) न्यायाद्वादौ त्रिणू । ननु अम् च शस् च तौ, तयोरः अम्शसः, धिश्च अम्शसश्च तयोर्लोपः ध्यम्शसलोपः इति कृते सिद्धे आदिशब्दस्य ग्रहणं, क्वचिदन्यतोऽपि धिलोपार्थं, तेन गन्धर्व्ववाचि-ते शब्दस्य धौ हे ते, तथा महान् इः कामो यस्य स तस्य धौ हे महि, ऐजधोः क्विप् जः महानूर्यस्य स तस्य धौ हे महो इत्यादौ एङोऽपि धेर्लोपः । हे भोः हे भगोः हे अघोः इत्यत्र कथं न धिलोप इति, अभोभगोऽघोभ्य इत्यादिज्ञापकात् (२) ।

मातृकस्य मातः पुत्रे मातृस्तुतौ धौ ।
महाकुलसम्भूताया मातुस्तुत्यापत्यस्यापि स्तुतिर्मातृस्तुतिस्तस्यां गम्यमानायां मातृकस्य मातः स्याद्धौ परे पुत्रे वाच्ये । हे गार्गीमात हे वात्सीमात पुत्र धन्योऽसि । पुत्रे किं—गार्गीमातृके कन्ये

---

(१) तुल्यबलविरोधे परं कार्य्यं स्यादित्यर्थेनयापि विप्रतिषेध इति ।१।४।२।
(२) अभोभगोऽघोभ्य इत्यत्र विसर्गलोपविधानात् ।

१०५। शस्नामि घंः। (शस् नामि ७, घं: १।)।
शसि नामि च परे स्वस्य घंः स्यात्।

---

धन्यामि। स्तुतौ किं—दासीमातृक पुत्र। माताशब्दद्वारैव सिद्धे गार्गीमातृक इत्यनिष्टनिवारणार्थमिदम्।

१०५। शस्। नुमो नयुक्त आम् नाम्, गमकत्वात्(१) सः। शस् च नाम् च तत्तस्मिन्। दीरुशस्य स्वभावघंत्वे स्वमनुवर्त्तयन्नाह स्वस्येति। नुस्निकोऽप्यनामि इति ज्ञापकात् नुम्सहितामो ग्रहणात् शार्ङ्गिणामित्यादौ न स्यात्। न चामि कृते सिध्यतीति वाच्यं, रामाणामित्यादौ घं स्वाभावान्नुमोऽभावप्रसङ्गात्। नापि नुमाम इति स्वग्रहणात् भविष्यतीति वाच्यं, तिसृणां नृणामित्यत्र चरितार्थत्वात्। न च स्वस्यानजत्वात् भविष्यतीति वाच्यं, सह एन वर्त्तमानाः, विगत इर्येषा ते, तेषां सां व्यां इत्यादौ नुम्प्रसङ्गात्(२)। बहुः ऌर्यत्र तान् बह्व्ऌन्। परे तु ऌकारे घंत्वाभात् सवर्णदीर्घे ॠकारस्तेन बहॄन् इत्याहुः। अन्ये तु लकारभागद्वययुक्त ॡकारस्तेन बहुॡन् इत्याहुः।

ऌत औजसद्गां पुंसि घं.। ऌकारस्य औकारेण जसोऽकारेण च सह घं: स्यात् पुंलिङ्गे। बहुऌर्ययोर्येषां वा तौ बह्वृ ते बह्वृः। परे तु बहॄ बहॄरित्यादि।

---

(१) तदर्थबोधकत्वात्। नाम् इत्युक्ते नुमो नयुक्त आम इत्यर्थप्रतीतेरित्यर्थः।

(२) अत दुर्गादास—किन्तु आम यद्यपि नैवेऽसिद्धो नामीति कृतं आगमादेशयोरागमविधिर्बलवानिति न्यायस्वीकारार्थम। तेन क्रोष्टूनामित्यत्र आदौ नुमि प्रमादेशो नस्यात्। एव प्रकृते अकारदीर्घे दीर्घस्य स्थानिवद्भावेन ह्रस्वपरत्वात् यथा

**१०६ । पुंसि तु शस् न ।**

( पुंसि ७।, तु ।१।, शस् ।१।, न । १। ) ।

स्वात् परः शस् न स्यात् पुंलिङ्गे । रामान् ।

**१०७ । टा-भिस्-ङे-ङसि-ङसोसा-मिनैसयात्-स्य-यीसोऽतः ।** (टा-ओसाम् ६।।।, इन-योस: १।।।, अत: ५।)

अकारात् परेषामेषां स्थाने एते क्रमात् स्युः ।

---

१०६ । पुंसि । पुंस्त्वमिह शब्दानां शिष्टकृतपरिभाषाविषयत्वं, न तु स्तनश्मश्रुादिमत्त्वम्, दारकलत्रादौ तदभावात् । एवं स्त्रीत्वनपुंसकत्वे अपि । यदुक्तं—

शब्दसंस्कारसिद्धार्थमुपाया: परिकल्पिता: ।
सर्व्ववस्तुगता धर्म्मा: शास्त्रे पुंस्त्वादयस्त्रय: ॥
ये तु लिङ्गादिसम्बन्धा: प्राणिजातीयगोचरा: ।
न तेऽभ्युपाया: संस्कारे दारादिषु तटादिषु ॥

रामान् इति—अनेन ने कृते पूर्व्वेण वं: (१) । कथं सान् वीन् इति ? उच्यते, भूतपूर्व्वस्तमाश्रित्य शसो नादेशः ।

१०७ । टा । स्वात्त्वात् पुंसीति नानुवर्त्तते, अतः क्लीबेऽपि, तेन ज्ञानेनेत्यादि । ऐस् भात् करणं निर्ज्जरसै: निर्ज्जरसादिति

---

शसो नकारविधानं तथा आमो नुमागमो मा भूदिति ज्ञापनार्थञ्च नामीति कृतम् । अतएव स: विष्णुः, सह इन वर्त्तते य: स सा:, विगत इ: यस्मात् स वी: तेषां, षां व्यामिति ।

(१) दुर्गादासस्तु वहिरङ्गविधेरन्तरङ्गस्य बलवत्त्वादादौ दीर्घे कृते षत्वम् स्यादाह । वयन्तु स्वतहवस्य पौर्व्वापर्य्येणाचार्य्यस्यापि मतमेतदिति मन्यामहे ।

## १०८। ष्णुर्णोऽदान्ते नोऽवकुप्वन्तरेऽप्यतद्वात्त्व-पक्वयुवाङ्गः ससेप्स्यादे नैकाच्कोस्तु वा ।

( ष्णुः ५।, णः १।, अदान्ते ७।, नः ६।, अवकुप्वन्तरे ७।, अपि ।१।, अतद्वात् ५।, तु ।१।, अपक्वयुवाङ्गः ६।, ससेप्स्यादेः ६।, नैकाच्कोः ६।, तु ।१।, वा ।१। ) ।

---

सिद्धार्थम् । ब्वेस्थ्येरित्यत्र ब्वस्थ्योस्ये रिति कृते सिद्धे अतीस्ग्रहणं, अदुग्रहणेन लाक्षणिकस्याप्यतो ग्रहणमिति ज्ञापनार्थम् । तेन, येन तेन यैः तैरित्यादि । एवमन्यत्रापि क्वचिदनतोऽपि ङसः स्य-विधानार्थमिति । तथाच—

नवं नवं परिक्षिप्य पुराणमपकर्षतः ।
अतिजरस्य भिक्षुष्य कन्या वर्षशतं गता ॥

इति प्रकृतिङन्तः (१) ।

उदधिस्योत्तरे तीरे सतः किमनुशुष्यते इति उदधिमिच्छति, क्ये सन्, पचाद्यनि उदधिया गङ्गा, तस्या उत्तरे उदधिस्योत्तरे इति (२) ।

---

(१) कातन्त्रेऽपि इमकृत इति चतुष्टयवृत्ति २२म सूत्रे नवं नवमिति श्लोकद्वयस्य ऋषिप्रयोगादिति चिन्त्यमित्याह कविराज ।

(२) अतःपरं बहुषु पुस्तकेषु 'मा मा सखे वदन्तस्य समोऽहं विजने वने इत्यत्र वदन्निति क्रिया असंहितत्वात् नष्टा न सन्' इत्यधिकः पाठः । अस्य तु प्रकृते कीदृगुपयोगित्वं तत् सुधीभिश्चिन्त्यम् ।

कातन्त्रीय-व्याख्यासारे तु—"उदधिस्योत्तरे तीरे अप्यम्बा नाम राक्षसी। तस्या अदर्शमात्रेण गङ्गा भवति दुर्भिक्षो" इत्युक्त्वा अत्र चनकारान्तादपि इनः स्य इष्टम् ।

षकारात् रेफात् ऋवर्णाच्च परस्य अदान्ते स्थितस्य नस्य णः स्यात्, अव कवर्ग-पवर्ग-व्यवधानेऽपि ।

यत्र दे न स्तो ऽन्यत्र गतात्तु निमित्तात् परस्य, सान्निहितेनेपा स्यादिना च सहितस्य, षकादिवर्जितस्य, स्यात्, तस्यैवैकाचः सकवर्गाच्चान्यस्य, वा स्यात् । रामेण ।

---

१०८ । पृ । य च र च ऋट्य, तत्तस्मात्, पुंस्त्वं सौत्रत्वात् । दस्यान्तो दान्तः, न दान्तः अदान्तस्तस्मिन् । अव् च कुश्च पुश्च ते अवकुपवः, तैरन्तरं व्यवधानम् अवकुप्वन्तरं तस्मिन् । तच्च तत् दश्चेति तद्दं, न तद्दम् अतद्दं तस्मात् । षकश्च युवा च षदश्च तत्, न तत् अतत् तस्य अषकयुवाङ्गः । ईप् च स्यादिश्च तौ ईप्स्यादी, सादीप्स्यादी सेप्स्यादी, ताभ्यां सह वर्त्तमानः सर्वेप्स्यादिस्तस्य । एकोऽच् यस्य स एकाच्, एकाच्च कुश्च तत्, न तत् नैकाच्-कुः तस्य, पुंस्त्वं सौत्रत्वात् । परभागे अतद्दादित्युक्तेः पूर्व्वभागे समानदस्थनिमित्तादित्यर्थः । यद्यपि कुष्णाति पुष्णाति इत्यादौ ष्टुभिष्टु इत्यादिना सिध्यति, तथापि प्रेपेण इत्यादिसिद्ध्यर्थं पग्रहणम् । यत्रेत्यादि—यस्मिन् दे नकारः तद्भिन्नदस्थात् षकार-रेफ ऋवर्णात् परस्य नकारस्य सात् कृताभ्यामीप्स्यादिभ्यां युक्तस्य षकादिभिन्नस्य णः स्यादित्यर्थः । तस्यैव नकारस्य एकाच्-कवर्गयुक्त-द-भिन्नसम्बन्धिनो वा स्यादित्यर्थः । एतेन एकाच् कवर्गयुक्त-द-सम्बन्धिनो नकारस्य णो नित्यं स्यादित्यर्थः । षकादेरुभयत्रापि निषेधः । एकाच कोर्यथा—हवहणो वमयुगाणीत्यादि । एकाच्कु-भिन्नस्य—हरिभाविणो हरिभाविनो, व्रीहिवापिणो व्रीहिवापिनो । षकवर्ज-

नात् स्यादेर्नकारस्यापि णत्वं, तेन रम्यविणा, श्रीकामेण, श्रीभावेण श्रीभावेन इत्यादि । पकादेस्तु–रम्यपकेन रम्ययूना दीर्घाङ्गेत्यादि । अपदान्त इति किं—रामान्, व्रीहिवापिन् । अवकुप्यन्तर इत्येव, शु ट् तु ल श स व्यवाये माभूत् । यथा—महाराजानां, वराटिकानाम्, ऋतूनाम्, अरालानां, राज्ञीना, रसानामित्यादि । सन्निहितेति किं-वीरस्य भगिनी वीरभगिनी इत्यादि (१) । वाशब्दस्य व्यवस्थावाचित्वात् क्वचिदन्यत्रापि । तथाहि—

सदर्गयनभिन्नस्य सिध्रकादेर्वनस्य च ।
नाम्नानाम्नि तु कार्यादेः सिध्रकाद्यासु सिध्रका ।

---

(१) अत्र सूत्रे एव तुकौ पूर्व्वेण सम्बद्धौ ष्टुन्यौ तु परगामिणौ । षत्वादोऽयोग-वाहाख्या णत्व-कर्म्मण्यथो मता इत्युक्तं दुर्गादासेन । तर्कवागीशेन तु क×पौ ✕मनूष्मा-विति सूत्रस्य टीकायां "एषां सामान्येनोपदेश इत्यता णत्वविधौ व्यञ्जनता परगम-मार्यमित्युक्तत्वान्न पुनरुक्तम् ।

क्षुभ्नाति तृम्फति तृम्पति रञ्जयति रम्भयति इत्यादौ भवपरत्वाद् बलवता म्नोर्नुं रित्यनेन प्रादौ नस्यानुस्वारे जपे अम्नोरित्यनेन पुनरनुस्वारस्य ञकारादि स्यात् । क्रन्दति मन्थति क्रन्दति रम्भन्ति इत्यादौ तु तवर्गेषु परेषु नस्यानुस्वारे पुनरनुस्वारस्य नकारे सकृद्गतौ विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्याया-णत्वं न स्यात् इति किन्तु क्षुभ्नादिषु क्षुभ्नास, अधो स्कुद स्कुप, अर्ह समर्थ इत्यादौ मकारे परेऽनुस्वाराभावात् पूर्व्वनकारस्य णत्वे ष्टुभिरित्यादिना परनकार-स्यापि णत्वमिति । किन्तु भिन्दिर निर्भिद्य भिदा प्रभिद्य इत्यादौ पूर्व्वपदस्य निमित्तात्तु व्यस्य न्यनुकारेति समासे रेफषकारयोरेकतरेण नकारस्य सम्बन्धाभावा-णत्वं न स्यादेव । अत्रापि णत्वमित्येके । इत्यपि दुर्गादास । तर्कवागीशमते क्षुभ्नादि-तोत्यादीनि क्षुभ्नादौ द्रष्टव्यानि । उक्तञ्च काशिकायां ' अविहितलक्षणो णत्वप्रति-षेधः क्षुभ्नादिषु द्रष्टव्यः इति (८।४।३८)।

मिश्रका शारिकाश्चे च पुरगा कोटरा द्रुमे ।
कार्ष्णेन्तु प्लक्ष-पीयूक्षाः खदिरान्तः-प्र-निः-शराः ।
आम्रश्चाथ नसः प्रादेर्वाह्यात्तु वाहनस्य च ।
त्रिचतुर्भ्यां वयस्येव हायनस्याथ चान्तरः ।
हनोऽदेशेऽयनस्याथ देशे पानस्य च स्मृतः ।
वा नद्यादेश गिर्य्यादेः पानस्य तु ध-भावयोः ।
द्वित्रग्व्यब्देभ्यां वनस्यत्योषधिभ्यां हि वनस्य च ।
क्षुभ्रादीना न णो नित्यं तिमिरादेर्वनस्य च ।
अनाङ्-ट-ल्ट व्यवाये च दान्तपादपि मन्यते ।
क्षुभ्रादौ अत्र नायान्ता रींस्तथा परिवर्त्तनम् । (१)
दुर्णामा परमानन्दः पर्य्यग्निर्नरवाहनः ।
नरनारायणो वारिनिधि वीर्व्विधिरित्यपि ।
ष्टम्नोत्याचार्य्यभोगोन(२)स्त्रिनेत्रः सर्व्वनाम च ।
हरिनन्दी सुरानन्दः स्वर्भानुः परनन्दनः ।
श्रीघनः शास्त्रवाक्यानि चित्रभानुः पुनर्नवा ।
दुर्णद्दो नृनमनः सुवनङ् दुन्दुभिपेवनम् ।
आचार्य्यानी-त्रिनयनौ दुर्णद्धि-हरिनन्दनौ ।
परिगहनं परिनगरं परिनदनं शरनिवेश-शरनिवासाः ।
हरिनगर-सुमन्त्रनेव दर्भानूपास्तु इत्यादि ॥

(१) परिवर्त्तन रीमस्थानजातौ रिन् रमावपीत्यर्थं ।
(२) आह्मभोगीण इत्यत्र तु आह्मगोगाय हित इत्यर्थे ईने कृते एकपदत्वात् णत्वं स्यादेव ।

अतद्धादित्यनुवर्त्तते। संज्ञायाम् ऋगयनभिन्नस्य उत्तरपदस्थस्य नस्य नित्यं णः स्यात्, सिध्रकादेः परस्य वनस्य नस्य च। शूर्पा इव नखा यस्याः सा शूर्पणखा रावणभगिनी; शूर्पनख्या इत्यार्षः। नारा आपोऽयनमस्य नारायणः। तथाह—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।

अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥

वर्द्ध चर्म्म, तस्य विकारे ष्णः, संज्ञापूर्व्वको विधिरनित्य इति न्यायात् अभावः, वर्द्ध्री चर्म्मरज्जुः, वर्द्ध्रव वार्द्ध्री, वार्द्ध्रीव नासिका यस्य स वार्द्ध्रीणसः, द्रुरिव नासिका यस्य द्रुणसः, एवं खरणाः खरणसः (१) ग्रामणीः अग्रहायणी अक्षौहिणीत्यादि।

सिध्रकादेर्वनस्य चेति। सिध्रकावणं मिश्रकावणं शारिकावणं वनस्याग्रे अग्रेवणं, राजदन्तादित्वात् परनिपातः। पुरगावणं कोटरावणम्(२)। संज्ञायामिति किं—चर्म्मनासिकः। सिध्रकादेरिति किम्—इन्द्रवनमित्यादि।

असंज्ञायां कार्य्यादेर्वनस्य नो णः। कार्य्यस्य वनं कार्य्यवणम् इक्षुवणं प्लक्षवणं पीयूक्षावणं खदिरवणम् अम्रवणं प्रवणं निर्वणं प्ररवणम् आम्रवणम्।

अथ प्रादेः परस्य नसस्य नो णः। प्रगता नासिका यस्य प्रणसं मुखम्, एवं दुर्णसं परिणसमित्यादि।

---

(१) भावेन्नुरिति सूत्रे वस्त्वादाम्नोत्यादिवार्त्तिकद्वयं द्रष्टव्यम्।

(२) रूपनाम गोत्रेति सूत्रस्य तत्त्वबोधिनीटीकायां "कोटर किंशुकादीनाम् गिर्य्योनाम्नी"ति च।

वाह्यात्तु वाहनस्य नो णः। उह्यते यत् तद्वाह्यं, ढे घ्यण्, उह्यते येन तद्वाहनं घेऽनट्। यथा—दर्भस्य वाहनं दर्भवाहणम् इक्षुवाहणं शकटम्, एवं शरवाहणं धनुः। वाह्यात् किं—दाक्षिवाहनो गार्ग्यवाहनो रथः, (१) यदा तु दाक्षिर्गार्ग्यश्च वोढव्यस्तदा दाक्षिवाहणः गार्ग्यवाहणश्च भवत्येव।

वयसि गम्ये त्रिचतुर्शब्दाभ्यां परस्य हायनस्य नो णः। त्रीणि हायनानि यस्य त्रिहायणो वत्सः, एवं चतुर्हायणः। वयसि किं—त्रिहायना चतुर्हायना शाला।

अथ वेति चकारस्य व्यवहितेनान्वयः। अदेशे गम्ये अन्तरः परस्य हनो अयनस्य च नो णः। अन्तर्हन्यते अन्तर्हणनम्, एवम् अन्तरयणम्। अदेशे किम्—अन्तर्हननो देशः, अन्तरयनो देशः।

अथ देशे प्राच्येऽतद्स्थात् पुः पानस्य नो णः। पीयते यत् तत् पानं, ढेऽनट्, सुरा पानं येषां ते सुरापाणाः प्राच्याः, क्षीरपाणाः उशीनराः, सौवीरपाणाः (२) वाह्लीकाः, कषायपाणाः गान्धारा इत्यादि। यद्यपि प्राच्यादिशब्दा देशविशेषभूता न, मनुष्ये वर्त्तन्ते, तथापि देशसम्बन्धद्वारेणैव मनुष्ये प्रवृत्ता, अतो देशपदेनाभिधीयन्ते। यद्वा सुरा पानं यस्मिन् देशे इति हेन देशो वाच्यः। देशे किं सुरापानाः शूद्रा इत्यादि।

वेत्यादि। गिर्य्यादेः परस्य नद्यादेर्नो वा णः। गिरिणदी

(१) रथोऽत्र तदुभयस्वामिक इत्यर्थः।

(२) सौवीर काञ्जिकं काँजि इति भाषा।

गिरिनदी, गिरिणदं गिरिनदं, वक्रणदी वक्रनदी, वक्रणितम्बा वक्रनितम्बा। स्त्रीलिङ्गगणे पाठात् पुंसि न स्यात्, तेन वक्रनितम्बः गिरिनद इत्यादि। आकृतिगणोऽयम्। वेति सर्व्वत्रान्वयः।

पूर्व्वंदस्थात् पुंधंभावविहितस्य पानस्य नो वा णः। क्षीरं पीयते अनया क्षीरपाणी क्षीरपानी, क्षीरस्य पानं क्षीरपाणं क्षीरपानं। ध-भावयोः किम्—उष्ट्रेण पीयते अस्याम् उष्ट्रपानी पात्री।

द्वौ च त्रयश्च, द्वित्रयोऽचः सन्ति ययोः तौ ताभ्यां, वनस्पतिश्च ओषधिश्च तौ ताभ्याम्। वनस्पत्योषध्योर्द्वित्र्यज्वतोः पुंर्वनस्य नो वा णः। व्रीहिवणं व्रीहिवनं, शिग्रुवणं शिग्रुवनं (१), नीवारवणं नीवारवनं, शिरीषवणं शिरीषवनम्। द्वित्र्यज्वतो रिति किं—राजमाषवनं पारिभद्रवनम्। वनस्पत्योषध्योरिति किं—विदारीवनम् (२)।

फली वनस्पतिर्ज्ञेयो वृक्षाश्च फलपुष्पगाः (३)।

ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः॥ इति कस्यचिन्मतम्। त्रिकाण्डे तु—

महीरुहः कुजो वृक्षो वनस्पतिर्वनेरुहः।

अगो नगाऽगमश्चैव शाखी द्रुमस्तरुः स्मृतः॥

पुष्पं विना फलवान् फली वनस्पतिरुडुम्बरादिः। फलपुष्पे उपगच्छन्ति ये ते वृक्षशब्देनोच्यन्ते। पाणिनीयस्वरसाधकार समु-

---

(१) शिग्रु शोभाञ्जन सजिना इति भाषा।

(२) विदारी भूकूष्माण्ड।

(३) वृक्षाः पुष्पफलोद्गमा इत्यन्यत्र पाठ।

चयनीयः (१)। केचित्तु दूर्व्वावनमिति प्रत्युदाहरन्ति, तन्नाहृतमस्माभिः, दूर्व्वाशब्दस्यौषधिपर्य्यायत्वात् ।

क्षुभ्नादीनां नस्य णो नित्यं न स्यात् । क्षुभ्नाति क्षुभ्नीतः क्षुभ्नन्तीत्यादि । एवं विष्कभ्नाति हरिनाथः रमानाय इत्यादि । रीन् नरीनरीति नरीनर्त्ति इत्यादि । रीन्त्यामित्वात् रिन्नोर्ग्रहणं, तेन नरिनर्त्ति नर्नर्त्तीत्यादि । आदिशब्दादन्त्यन्त्वोरपि ग्रहणं, तेन कुर्व्वन्ति कुर्व्वन्तु इत्यादि । आकृतिगणोऽयम् ॥

तथा तिमिरादेः परस्य वनस्य नो णो नित्यं न स्यात् । तिमिरवनम् इरिकावनं अङ्गिकावनम् ।

अनाडित्यादि । न आङ् अनाङ्, अनाङ्च तत् दश्चेति अनाङदम्, अनाङदश्च लश्च, तेन व्यवायस्तस्मिन् । अनाङ्-दल-व्यवाये उत्तरदस्यस्य नस्य णो नित्यं न स्यात् । दात्तपादपि । यथा—मापक्षुभ्नावपिनौ चतुरङ्गयोगिन पर्य्यवनद्धं प्रक्षुभ्यमानं दुष्पानमित्यादि । अनाङ् किं-पर्य्याणद्धम् ।

---

(१) चकारेण वनस्पतेः समुच्चयः, वनस्पतयोऽपि वृक्षा इत्यर्थः । यतोऽत्र चकारात् वनस्पतिपर्य्यन्तेन वृक्षा अप्युच्यन्ते इति निष्कर्षः । अतएव "सत्यपि भेदे वृक्षवनस्पत्योरिहाभेदेन ग्रहणं द्रष्टव्य"मिति कारिका । फलवान् पुष्पाणि न तु पुष्पं न फली वनस्पतिर्यथा, [illegible] उदुम्बरादयः । वृक्षा इत्यादि—ये पुष्पाणि गच्छन्ति फलान्यपि गच्छन्ति उभयवन्तस्ते पुष्पफलोपगाः । एवं यो वनस्पतिः सोऽपि वृक्षो भवति, न तु यो वृक्षः सोऽवश्यं वनस्पतिरिति विशेषः । ओषध्य इत्यादि—ओषधिशब्दादिदन्तात् ङीप् । फलपाके अन्तो विनाशो यासां ताः फलपाकान्ता ओषध्यः शाल्यादयः । लता इत्यादि—लताः विततयः प्रतानवत्यः । गुल्माश्च स्तम्बरूपा अप्रकाण्डाः शाखोटादयः (शाखोटः शिपिञ्जा इति भाषा) इति गोयीचन्द्रः ।

१०९। आ त्ति-भम्वि (१)।

( आ।१।, त्ति-भम्वि ७)।

अकार आकारः स्यात् त्तौ भं-म-वेषु परेषु।

रामाभ्यां रामैः, रामाय रामाभ्याम्।

११०। व्वे स्भ्येः। (व्वे ७, स्भि ७।, एः १।)।

अकार एकारः स्यात् त्तौ व्वे सभयोः परयोः।

रामेभ्यः, रामात् रामाभ्यां रामेभ्यः, रामस्य रामयोः।

---

१०९। आत्ति। मच वच म्व भय म्वच भम्व त्तोर्भम्व तस्मिन्। मण्डूकगत्या त्तिविपरिणामेन अत इत्यनुवर्त्तयन्नाह अकार इति। त्तौर्भमवेष्विति स्यादेर्भे त्यादेर्मवयोरित्यर्थः, तेन रामं ग्रामामित्यादौ न घः (२)।

११०। व्वे। सच भच तत्तस्मिन्। अदित्यनुवर्त्तते, तेन समाभ्य इत्यादौ न स्यात्। त्यादेः सकार-भकारयोरभावात् स्यादावस्य विषयः। व्युत्क्रमनिर्देशात् क्वचिद्बाधक ऐस् वाध्यते, तेन मान्यवरेभिः गन्धर्व्ववरेभिः (३) इति बौद्धप्रयोगः।

---

(१) आत्तिमभवीति बहुषु पुस्तकेषु पाठः। किन्तु तर्कवागीशटीकायां भ म व एषां व्यासवाक्यानुसारेणास्य मते भम्वीत्येव पाठः। आदौ स्यादिप्रकरणे भस्य पश्चात्त्यादिप्रकरणे मवयोः सार्थकत्वात् समीचीनोऽप्ययं इति मन्यामहे।

(२) ननु राममित्यादौ कथमाकारो न स्यात् अकारलोपस्य सार्थकत्वादिति चेन्न। हरिं विष्णुमित्यादौ तस्य सार्थकत्वात्। वस्तुतस्तु भवयोः साहचर्य्यात् विभक्तेराद्यवयवभकारे परे इत्यर्थः। अतएव त्वां मामित्यादिसाधनाय टेष्योर्मकारे कृतेऽपि समभोऽसाङ इत्याकारं विधास्यति।

(३) माल्यवरेभिः गन्धवरेभिरिति पाठान्तरम्।

## १११ । नुमामः स्यप्-सङ्ख्यार्ष्णः ।

( नुम् ।१।, आमः ६।, स्याप्-सङ्ख्यार्ष्णः ५। ) ।

स्यात् या आपो रषनान्त-सङ्ख्यायाश्च परस्याम आदौ नुम् स्यात् । र्ष-णत्वे । रामाणाम्, रामे रामयोः ।

## ११२ । किलात् कृतो ऽसात् सः षो ऽदान्ते नुव्यन्तरेऽपि शास-वस-घस-साढाञ्च ।

(किलात् ५।, कृतः १।, असात् ।१।, सः १।, षः १।, अदान्ते ७।, नुव्यन्तरे ७।, अपि ।१।, शास-वस-घस-साढां ६॥, च ।१। )

कवर्गादिलाच परः कृतः साद्वर्जो दमध्यगः सकारः शासादेश्च षः स्यात्, नु-वि-व्यवधानेऽपि । एत्व-षत्वे । रामेषु ।

एवं मुकुन्दानन्दगोविन्दादयः ।

---

१११ । नुमामः । रश्च षश्च नश्च तत् र्ष्ण, संख्या च तत् र्ष्ण चेति तत्र, स्यश्च टौ च आप् च संख्यार्ष्ण च तस्मात् । येन विधिस्तदन्तस्येति न्यायादाह रषनान्तेति । मुख्यलाक्षणिकयोर्मुख्यस्यैव ग्रहणं न तु लाक्षणिकस्येति न्यायात् प्रियचतुरां प्रियचतुरामित्यादौ न स्यात् । बहुप्रेयसीनामित्यत्र अप्रत्ययपरत्वेन नुमिति भाष्यम् ।

११२ । किलात् । कुश्च इलश्च तत्तस्मात् । न सात् असात्, न दान्तोऽदान्तस्तस्मिन्, नुश्च विश्च नौ, ताभ्याम् अन्तरं नुव्यन्तरं तस्मिन् । शासश्च वसश्च घसश्च साट् च ते तेषाम् । अन्तर्गतः प्रासादं इत्याह दमध्यग इति, तेन दधि सिञ्चति हरिस्त्विन्दौ न

स्यात्। अक्कतसत्वात् शासवसघसां ग्रहणम्। साढ़ः क्कतसत्वेऽपि क्किलभिन्नादपि षत्वार्थं नियमार्थञ्च ग्रहणं, तेन तुराषाट् ऋतीषाट् इत्यादौ स्यात्, न तु तुरासाहौ ऋतीसाहावित्यादौ। शासादेस्तु क्विलादेव, तेन अशिषत् उषितः जक्षुरित्यादौ स्यात्, न तु शास्तीत्यादौ। कवर्गग्रहणात् वाक्षु प्राङ्षु इत्यादि। नुव्यन्तरेऽपीति-सर्पींषि धनूंषित्यादि। नुमो नु-ग्रहणात् पुंसु इत्यत्र न षः। सर्पिष्षु धनुष्षु इत्यादि शषि वा शर्विधानात्। क्कत इति किं—विसं (१) मृणालमित्यादि।

सेऽग्नेर्ष्टःसोमस्य॥ अग्निशब्दात् अवयवात् सोमस्य सः षः स्यात् से सति। अग्नीषोमौ, देवता-चे ङी। तस्मादिति किं-ज्योतिरग्निः सोमो लता तयोर्थे अग्निसोमौ, अग्निश्च इव सोमश्च ते अग्नीसोमाः।

मातापितृभ्यां स्वसुर्वा तु यन्ताभ्याम्। आभ्यां परस्य स्वसुः सः षः स्यात्, यन्ताभ्यान्तु वा से सति। मातृष्वसा पितृष्वसा मातुःष्वसा मातुःस्वसा पितुःष्वसा पितुःस्वसा इत्यत्र से ष्या लुग्वा।

निनदीभ्यां स्नः कौशले॥ नेर्नद्याश्च स्नः सः षः स्यात् कौशलेऽर्थे से सति। निष्णातः कुशलः, तथाचातिथ्यनिष्णा वनवासिमुख्या इति भट्टिः। नदीष्णः, तथाच ततो नदीष्णान् पथिकानिति भट्टि.।

(१) विस इर् क्षेपे इत्यस्मात् क।

दिवि द्युभ्यां सदो देवे। आभ्यां सदः सः षः स्यात् से सति देवे वाच्ये। दिविषदः द्युषदो देवाः, अन्यत्र द्युसत्।

कपिप्रतिभ्यां स्थलस्नातयोर्गोत्रसूत्रयोः। आभ्यामनयोः क्रमात् सः षः स्यादनयोरर्थयोः से सति। कपिष्ठलः ऋषिः, स्वभावात् पुंलिङ्गः। प्रतिष्णातं सूत्रं पाणिनेः, सुविशुद्धमित्यर्थः।

वेस्तरस्य वृचासनयोः। वेस्तरस्य सः षः स्यात् अनयोरर्थयोः से सति। विष्टरो वृचः कुशमुष्टिश्च, विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः। अन्यत्र विस्तरः।

नृगोभ्यां सनो नाम्नि। आभ्यां सनोते र्नाम्नि सः षः स्यात् से सति। नरं सनोति नृषाः गां सनोति गोषाः।

अभिनिरः स्तानस्य शब्दनाम्नि। अस्मात् स्तानस्य सः षः स्यात् शब्दनाम्नि से सति। अभिनिष्टानो विसर्गः। तथाच—वचः स्पष्टाभिनिःष्टानमिति माघः। वैकल्पिकमिदमित्यन्ये। शब्दभिन्ने अभिनिस्तानो मृदङ्गः।

इलादेति नाम्नि वा तु भात्। इलात् परः स एकारे परे षः स्यात् नाम्नि से सति, भात्तु वा। सुषेणः, हरिषेणः। भात्तु-भरणिषेणः भरणिसेन इत्यादि। नाम्नि किं—पृथ्वीसेनः। एति किं—विस्रोता गङ्गा। इलादिति किं—विषुमश्चतीति क्विप्, स्त्रियामीप्, अचोऽल्लोपोर्घः, विषूची सेना यस्य, पुंवद्भावः, विष्वक्सेनः शतभिषक्सेनः।

प्रात् स्योऽयगे। प्रात् परस्य स्यस्य सः षः स्यात् से

सति अग्रगी वाच्ये। प्रष्ठोऽग्रगामी, एवं प्रष्ठा अग्रगामिणी। तथाच सर्व्वनारीगणप्रष्ठामिति भट्टिः। अन्यत्र प्रस्थः।

अवात् स्तम्भेराश्रयनिकटयोः। अवादाश्रये निकटे च स्तम्भेः सः षः स्यात् से सति। ग्राममवष्टभ्यास्ते, अवाष्टभ्नात्सेना (१) मौर्ज्जित्येऽपि(२)—अहो मल्लस्याऽवष्टम्भ इति चन्द्रः। अन्यत्र शीतेनावस्तब्धो जड़ीकृत इत्यर्थः।

निरस्तथ्येकसेवने। (३) निष्टपतिवह्निं राजा, सकृत्सेवते इत्यर्थः।

वर्हिष्ठादीनाञ्च।

वर्हिष्ठः सुषमं विषूति-विषमं नौषेचिका कुष्ठलं
निःषूति निःषितः सुषाम-विषितं निःषाम-नौषेचनम्।
दुःषामा निषयः सुषूति-विषयः दुःषेध-निःषन्धि च
द्विष्ठो दुन्दुभिषेचनं परिषित स्निष्ठः सुषेधो मतः।
अग्निष्टोम-सुषन्धि-विष्ठलमपष्ठाग्निष्ठ-गोष्ठं तथा-
ऽम्बष्ठाम्बष्ठ-दिविष्ठ-कुष्ठ-परमेष्ठाङ्गुष्ठ-दुःषन्धयः।
निःषेधोऽङ्गुरिषङ्ग-सुष्ठु-पृतनाषाड्‌ जलाषाहम-
ग्निष्टुष्टुप्-प्रतिष्णिकाः परिषयः यष्टुष्ठ-मध्येष्टरौ
गौरिषक्थय निष्णातो निष्णातिश्च परिष्ठलम्।
भीरुष्ठानश्च भूमिष्ठो ज्योतिष्टोम-शमिष्ठलं
रथष्पाच ऋतीषाहं निःषमं दुःषमं विषु।

(१) निकटीभूतेत्यर्थः।
(२) और्ज्जित्यं प्रावल्यं बलमेति गोयीचन्द्रः।
(३) निरः सकारस्य तपतौ परे षः स्यात् सकृत् सेवनेऽर्थे से सति।

आयुष्टोमश्च विष्टारो गविष्ठिर-युधिष्ठिरौ
परमेष्ठी उपष्टम्भः शेकुष्ठ स्निष्टुबित्यपि।
पुञ्जिष्ठोऽङ्गुलिषङ्गश्च निष्टुब्योऽनुष्टुभा सह।
सव्येष्टोऽपष्ठु सव्येष्ठा दुःषूतिश्च मनीषिभिः।
षट्सप्ततिरिह प्रोक्ताः शेषं शिष्टप्रयोगतः।

बर्हिषि तिष्ठतीति बर्हिष्ठः। सुपूर्व्व षम वैक्लव्ये पचाद्यन् सुषमम्। विपूर्व्व षूधोः क्तिः विषूतिः। विषम पूर्व्ववत्। षिच-धोर्णकः नौषेचिकेति चान्द्राः। स्थल ज स्थाने पचाद्यन्, पश्चात् कोर्भूमेः कुत्सितं वा स्थलं कुष्ठलम्। निषूतिः पूर्व्ववत्। निपूर्व्वात् षि ञ न ग बन्धे, षो य नाशे, आभ्यां क्तः, निषितः। सुपूर्व्व-षो य नाशे मन् सुषामा। विषित निषितवत्। निःषामा सुषामवत्। षिचधोरनट् नौषेचनमिति जयादित्यः। दुःषामा सुषामवत्। षि न् ग ञ बन्धे अल् निषयः। सुषूतिर्विषूतिवत्। विषयो निषय-वत्। षिध्यौ सिद्धौ घञ् दुःषेधः। डु धाञ् धारणे पुष्टो क्तिः सन्धिः, ह मः, निःषन्धिः। द्वयो स्तिष्ठति द्विष्ठः। दुन्दुभेः सेवनं दुन्दुभिषेवनं सुभ्वादित्वात् षः। परिषितो निषितवत्। विषु तिष्ठतीति विष्ठः। सुषेधो दुःषेधवत्। सुधोम्भः स्तोमः, अग्नेः स्तोमः अग्निष्टोमः। सुषन्धिर्निःषन्धिवत्। वेः पक्षिणः स्थलं विगतं स्थलं वा विष्ठलम्। अपतिष्ठतीति अपष्ठ इति न्यासः। अग्नौ तिष्ठतीति अग्निष्ठः। गावस्तिष्ठन्त्यत्र गोष्ठः। अम्बायां तिष्ठति अम्बष्ठ. मनीषादित्वात् ष्वः। आम्बष्ठ इति क्वचिदन्यत्रा-पीति घः। दिवि तिष्ठतीति दिविष्ठः, स्या न लुक्। कौ भूमौ

कुत्सितं वा तिष्ठति कुष्ठः । परमे तिष्ठतीति परमेष्ठः, स्या न लुक् । अङ्गौ तिष्ठतीति अङ्गुष्ठः । दुःषन्धिर्निःषन्धिवत् । निःषेधो दुःषेधवत् । अङ्गुरिषु सङ्गो यस्य सोऽङ्गुरिषङ्गः । शोभनं तिष्ठति सुष्ठु, बाहुल्यात् डुः, स्वरादित्वात् व्यम् । पृतनां सहते पृतनाषाट्, त पृतनाषाहम्, एवं जलाषाहं ; अषाढन्तत्वेऽपि षः । गणपाठसामर्थ्यात् पृतनासाड्वो जलासाड्वो इत्यादौ न स्यात् । ष्टु जल स्तुतौ अग्निष्टुत् । दुष्टु सुष्टुवत् । प्रतिपूर्व्वस्नातेरादन्ताड्डः, ततोऽल्पार्थे कः, कापि परे अकारस्य इकारः, प्रतिष्णिका । परिषयो निषयवत् । मङ्कुष्ठोऽङ्गुष्ठवत् । सव्ये तिष्ठति स्था-धोः रौणादित्वात् ऋक्, कित् आलोपश्च, सव्येष्ठा सव्येष्ठरौ सव्येष्ठरः सव्येष्टृभ्यामित्यादि । अन्ये तु ऋनृदन्तस्थानादन्तस्य षत्वं नेच्छन्ति, तन्मते हे सव्येस्थ इत्यादि । गौरीव सक्थि यस्य गौरिषक्थः, गणपाठात् स्वः । निपूर्व्व स्ना धोः क्तः क्तिय निष्णातः निष्णातिय । परिष्ठल कुष्ठलवत् । भीरोः स्थानं भीरुष्ठानम् । भूमिष्ठोऽग्निष्ठवत् । ज्योतिष्टोमोऽग्निष्टोमवत् ; स्वपात्तमपि लुप् वा । अम्बा स्थलं अम्बिष्ठल गणपाठात् स्वः । यत्र स्थाभावस्तत्र न स्यात्तेन अमोस्थलमिति । रथेन याति रथ्या नदी, मनीषादित्वात् सुमि अत्र पाठात् षत्वम् । ऋतीषाहं पृतनाषाहमिव । नि.षम-दुःषमौ सुषमवत् । विपूर्व्व सुधोः माद्दिसे विषु व्यम् । आयुष्टोमो ज्योतिष्टोमवत् । विपूर्व्वस्तृधोर्घञ् विष्टारः पङ्क्तिच्छन्दः, अन्यत्र विस्तारः पटस्य । गवि स्थिरः गविष्ठिरः, स्या न लुक् । एवं युधिष्ठिरः । 'परमे उपपदे स्थाधोरिन्नौणादिकः

परमेष्ठी स्था न लुक्। उपपूर्व्वं स्तम्भधोर्घञ् उपष्टम्भः। भ्रेकुष्ठोऽङ्गुष्ठवत्। विपूर्व्वे ष्टुभधोः क्विप्, विष्टुप्। पुच्छिष्ठोऽग्निष्ठवत्। अङ्गुलिषङ्गोऽङ्गुरिषङ्गवत्। ईवन्तादपि—अङ्गुलीषङ्गः अङ्गुरीषङ्गः। ष्टुभधोःक्तः निष्टुब्धः। अनुष्टुप् त्रिष्टुप्वत्। सव्ये तिष्ठति सव्येष्ठः स्था न लुक्। अपष्ठु सुष्ठुवत्। सव्ये तिष्ठति इति क्विप् सव्येष्ठाः स्था न लुक्। दुःषूतिः निःषूतिवत्। आकृतिगणोऽयम्।

न सुस्थादि-बहुप्रकृतेः। सुस्थादेर्व्वहुप्रकृतेश्च सः षो न स्यात् चे सति।

सुस्थः परिस्थितिर्दुस्थो दुस्थितश्च परिस्थितः।
निस्तब्धश्च (१) प्रतिस्तब्धः कसरा-कसरौ तथा।
धूसरो हरिसेतुश्च धूसरा गिरिसेतु च।
कपिसेतुः परिस्कन्दोऽभिसस्च (२) प्रयोगतः।

बहु-त्व-पूर्व्व-सकाराः सर्व्वे, यथा बहुसेतुरित्यादि। आकृतिगणोऽयम्।

---

(१) "निस्तब्ध इति नि उपसर्गः। निरस्तु निष्टब्ध" इति गोयीचन्द्रः।

(२) अभिपूर्व्वात् सुनोतेः सम्भात् क्विप्, इस्वात्तोप इत्यकारलोपः, धपेतु-सिति तङ्, व्यंनपूतयीति र्भः अभिसुत्।

"अभिसुद्भिरिति सम्भात् क्विप् सनुषे पदान्तत्वात् पत्वाभावे स्तौतेरेवेति नियमाभावे प्रकृतो प्राप्त षत्वं निषिध्यते" इति सन्धिपादे २८६ सूत्रे गोयीचन्द्रः। "षणि च अभिसुत्। सम्भादस्मात् क्विपतो लोपे कृते दीर्घः"—इति तत्त्व-बोधिनी। पाणिनि—८। ३। ११० काशिका द्रष्टव्या।

११३। से जस्-ङे-ङसि-ङीनामि-स्मै-स्मात्-स्मिनोऽतः।

(सेः ५।, जस् ङे-ङसि-ङीनां६।।।, इ-स्मै-स्मात्-स्मिनः १।।।, अतः ५।)।

अकारान्तात् सेः परेषामेषां स्थाने एते क्रमात् स्युः।

सर्व्वे सर्व्वस्मै सर्व्वस्मात् सर्व्वस्मिन्।

११४। आत् सुमामः। (आत् ५।, सुम् ।१।, आमः ६।)।

अवर्णान्तात् सेः परस्यामः आदौ सुम् स्यात्। एत्व-षत्वे। सर्व्वेषाम्। शेषं रामवत्। एवं विश्वादयोऽकारान्ताः।

उभशब्दो द्वान्तः। उभौ उभौ उभाभ्याम् उभाभ्याम् उभाभ्याम् उभयोः उभयोः। जसि—नेमे नेमाः। शेषं सर्व्ववत्।

---

११३। सेः। सर्व्वतो जयमिच्छन्ति पुत्रादेकात् पराजयमिति क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात्।

११४। आत्। पुनरादुग्रहणात् सर्व्वासामित्यादि। सर्व्वस्मिन्निति पूर्व्वेण स्मिन्। विश्वादय इति। उभशब्दो द्वान्त इति नित्यमिति शेषः। अस्य द्विसंज्ञाफलं त्यदादयोऽर्थार्थेति अर्थार्थप्रयोगे सर्व्वा त्रिः स्यात्। यथा—उभौ हेतू उभाभ्यां हेतुभ्यां उभयोर्हेत्वोरित्यादि। उभय इति तु उभशब्दादवयवार्थेऽयट्-त्वेन साधितादुभयशब्दात् द्वित्वे स्तो, न तु इमित्यनभिधानात्। तेन उभयस्मात् उभयेषामित्यादि। एकशब्दात् एकत्वसंख्यावाचित्वात् क्रमेव। आ दशभ्यः (१) संख्या संख्येय-

---

(१) अष्टादशपर्य्यन्तम्, ऊनविंशतेः प्रागित्यर्थः। संक्षिप्तसारे सुबन्तपादे १८२ संख्यकसूत्रस्य द्वे स्त्रियौ विंशतिः स्त्रियः स्त्रीणां वा इत्युदाहरणानि सन्ति।

१११५। पूर्व्वादेः स्मात्-स्मिनौ वा।

( पूर्व्वादेः ५।, स्मात्-स्मिनौ १॥, वा ।१। )।

तौ। पूर्व्वस्मात् पूर्व्वात्, पूर्व्वस्मिन् पूर्व्वे। शेषं नेमवत्। एवं परादयः।

समोऽतुल्ये इत्याद्युक्तिः—

नमः समस्मात् पूर्व्वस्मा अन्तरस्मा अनेधसाम्।
सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे॥

---

वृत्तिरेव, नतु संख्यावृत्तिः, तेन घटस्यैकः ब्राह्मणानामष्टादश इत्यादि न स्यात्। मुख्यान्यार्थैकशब्दास्तु द्रव्ये स्त एव, तेन एकी एकेषामित्यादि॥

११५। पूर्व्वा। तावित्युक्तेरकारादेव, (१) तेन पूर्व्वस्याः पूर्व्वस्यामित्यत्र न स्यात्। अतएवात् सुमामः इत्यत्र षादित्यस्य नानुवृत्तिः। शेषं नेमवदिति। पूर्व्वं पूर्व्वौ इत्यादि।

---

तत्रोक्तं गोयीचन्द्रेण 'द्वे स्त्रियौ विंशतिः स्त्रिय इति संख्येयार्थोऽत्र संख्याशब्दः अतएव विशेषणविशेष्यभावः। स्त्रीणां वेति विंशतिरिति पदमतानुपक्षणीयम् अत्र संख्यामात्रार्थता। अतएव गुणगुणिभोः सम्बन्धे षष्ठी। विंशतिशब्दस्य संख्येयार्थतां संख्यामात्रार्थताञ्च दर्शयितुमुदाहरणद्वयमुपन्यस्तं। वृत्तिकारैरेवं सूचितं विंशत्यादिशब्दाः सर्व्व एव संख्येयार्थाः संख्यामात्रार्थां वेति। इतःपूर्व्वं ये संख्याशब्दास्ते संख्येयार्थाः, अतएव द्विशब्दस्य संख्येयार्थता दर्शिता। यत आ दशभ्यः संख्याशब्दाः संख्येये वर्त्तन्ते, ततःपरं विंशत्यादयः संख्याने संख्ये च वैयाक्ताः। एतदपि व्यभिचरतीति सूचयितुं वार्त्तिककृता गुणवचनमुक्तेनुदाहृतमिति'।

(१) तौ इति स्मिन्नौ, यौ पूर्व्वेण इत्यनेन अकारात् परौ स्मात्-स्मिनौ भवत इत्यर्थः। अनेन पूर्व्वादेरिति प्रसन्य पुंसि क्लीबे च विषयो न तु स्त्रियामिति ध्वनितम्।

समायेषु परायेषां मुक्तयेऽर्थान्तराय च।
यदुस्वाय नमः स्वाय मल्लै र्जुष्टाय शार्ङ्गिणे॥
अतिसर्व्वाय सर्व्वाय साध्वन्यानां सखिद्विषे।
कालावराय कालेन पूर्व्वाय जगतो नमः॥

जसि—साध्वन्ये साध्वन्याः। जसि—अल्पे अल्पाः।

शेषं रामवत्। एवं प्रथमादयः। द्वितीयस्मै द्वितीयाय, द्वितीयस्मात् द्वितीयात्, द्वितीयस्मिन् द्वितीये। एवं तृतीयः। निर्जरः।

---

नमः समस्मात् इत्यादि—स्वयम्भुवे नम इत्यन्वयः। तस्मै कीदृशाय? समस्मात् पूर्व्वस्मै, सकलात् पूर्व्वकालवर्त्तिने। पुनः कीदृशाय? अमेधसां अन्तरस्मै, मूढ़ानां बाह्याय। पुनः कीदृशाय? सुमेधसां अन्तरस्मै, ज्ञानिनां हृदिस्थाय। पुनः कीदृशाय? सतां स्वस्मै, साधूनामात्मीयाय इत्यर्थः। क्रमेण प्रत्युदाहरति समायेत्यादि—शार्ङ्गिणे नम इत्यन्वयः। तस्मै कीदृशाय? एषां गोपालानां समाय तुल्याय। पुनः कीदृशाय? एषु जगत्सु पराय श्रेष्ठाय। (१) किमर्थं नमस्यति इत्यत आह-मुक्तये मुक्त्यर्थं, अर्थान्तराय प्रयोजनान्तराय धर्म्मार्थकामाय च इत्यर्थः। पुनः कीदृशाय? यदुस्वाय, यदूनां स्वाय ज्ञातये। पुनः कीदृशाय? स्वाय धनस्वरूपाय (२)। पुनः कीदृशाय? मल्लैर्जुष्टाय सेविताय इत्यर्थः।

---

(१) "एषु जगत्सु समाय तुल्याय समन्ततत्वादित्यर्थः। एषां जगतां मध्ये पराय श्रेष्ठाय नित्यत्वादित्यर्थः." इति दुर्गादासः।

(२) यदूनामिति शेषः।

न गौणात्स्येत्यस्योदाहरणमाह—अतिसर्व्वाय इत्यादि। सर्व्वाय सर्व्वनाम्ने शिवाय नम इत्यन्वयः। तस्मै कीदृशाय ? अतिसर्व्वाय सर्व्वमतिक्रान्ताय। पुनः कीदृशाय ? साध्वन्यानां सखिद्विषे, साधवश्च अन्ये च तेषां, यथाक्रमेण साधूनां सख्ये, अन्येषाम् असाधूनां द्विषे शत्रवे इत्यर्थः। अत्र सान्तविधेरनित्यत्वात् नाकारस्यः(१)। पुनः कीदृशाय ? जगतः कालावराय, कालेन कनिष्ठाय। पुनः कीदृशाय ? जगतः कालेन पूर्व्वाय, पूर्व्वकालवर्त्तिने ज्येष्ठाय इत्यर्थः।

चे जसि वेत्यस्योदाहरणमाह—जसि साध्वन्ये साध्वन्या इति।

पूर्व्वाद्यस्येत्यस्योदाहरणमाह—अल्पे अल्पा इति। एवं प्रथमे प्रथमाः, चरमे चरमाः, द्वितये द्वितयाः, उभये उभयाः, द्वये द्वयाः। माघे-द्वया द्वयेषामपि मेदिनीभृतामिति तु द्वयं द्वैतम् इच्छन्ति इच्छ सर्पणे क्विप्, द्वयेषमेषां, वाशब्दस्य व्यवस्थयेति परे। अर्द्धे अर्द्धाः, कतिपये कतिपयाः इति।

तीयोङिति इत्यस्योदाहरणमाह—द्वितीयस्मै द्वितीयाय इत्यादि।

इतरेतरान्योन्यपरस्परेऽप्ताः कर्म्मव्यतीहारे स्त्रियामादेराम् वा क्लीबोक्तयोः ॥ प्रीवर्जित-क्लौ परे कर्म्मव्यतीहारे एते निपात्याः स्त्रियः, एभ्यः परस्या अमादिक्तेः क्लीनपुंसकविषये आम् वा स्यात्। इतरेतराम् इतरेतरं स्त्रियः कुलानि वा पश्यन्ति। इतरेतराम् इतरेतरेण स्त्रीभिः कुलैर्वा भोज्यते। इतरेतराम् इतरेतरस्मै

(१) सैवमाद्यत्वधोऽस्तिसेन इमाहाङ्गो नेति।

११६। जरस् जराचि तु।

( जरस् ।१।, जरा ।१।, अचि ७।, तु ।१। )।

जराशब्दो जरस् वा स्यादचि परे।

निर्जरसौ निर्जरसः निर्जरसं निर्जरसौ निर्जरसः निर्जरसा।

केचिदादाविनातामिच्छन्ति, निर्जरसिन निर्जरसैः निर्जरसे निर्जरसः निर्जरसादित्यादि। पक्षे हसे च रामवत्।

---

स्त्रियः कुलानि वा स्पृहयन्ति। इतरेतराम् इतरेतरस्मात् स्त्रियः कुलानि वा विरमन्ति। इतरेतराम् इतरेतरस्य स्त्रियः कुलानि वा स्मरन्ति। इतरेतराम् इतरेतरस्मिन् स्त्रियः कुलानि वा अनुरज्यन्ते। एवम् अन्योन्याम्, अन्योन्यम्। परस्पराम् परस्परम् इत्यादि। इतरेतरादीनां क्रियाविशेषणत्वेऽपि पुंस्त्वैकत्वे स्वभावात् स्तः। अन्यथा अन्यादित्वात् इतरेतरान्योन्याभ्यां परस्य मस्य तादेशः स्यात्। केचित्तु तादेशमपि, तेन इतरेतरत् इतरेतराम् इतरेतरं कुलानि। एवम् अन्योन्यत् अन्योन्याम् अन्योन्यमित्याहुः। स्त्रीक्लीवयोरिति किम्—इतरेतरं पुरुषाः पश्यन्ति। अन्योन्यमिमौ विघटयतः। क्रियाविशेषणत्वे तु इतरेतरं पुरुषाः पश्यन्ति।

११६। जरस्। पूर्वसूत्राद्वानुवर्त्तते। प्रकरणात् क्तेरच्येव, तेन जरा अत्र इत्यादौ न स्यात्। परत्वादादौ क्तौ जरसादेशः न तु क्ति-कार्य्यं, तेन निर्ज्जरस निर्ज्जरसः निर्ज्जरसौः निर्ज्जरसामित्यादि। तु शब्दोऽनुक्तसमुच्चयार्थः, तेन अतिजरसस्य भिक्षुथ

११७। पाद दन्त यूष निशा पृतना मासासन सानु नासिकोदक हृदयासृक् यकृत् शकृत् शीर्ष दोषः-पद्दद् यूषन्निश् पृन्मासासन् स्नु नसुदन् हृदसन् यकन् शकन् शीर्षन् दोषणः शसादि-पौ ।

( पाद—दोषः १॥, पद्—दोषणः १॥, शसादि-पौ ७। )।

एषां स्थाने एते क्रमात् स्युर्वा शसादौ पौच परे ।

पदः पदा पद्भ्यामित्यादि । दतः दता दद्भ्यामित्यादि ।

---

कन्या वर्षशतं गता इत्यत्रानन्त्यपि जरसादेश इति कश्चित् । निर्जरस्विन निर्जरसादिति तु परमतमित्याह केचिदित्यादि । निर्जरैरिति ऐस्करणाच्च निमित्तापाये नैमित्तिकस्याप्यपायः । भाष्ये तु अतिजरैरित्येव ।

११७। पाद । पादश्च दन्तश्च यूषश्च निशा च पृतना च मासश्च आसनञ्च सानु च नासिका च उदकञ्च हृदयञ्च असृक् च यकृच्च शकृच्च शीर्षञ्च दोष् च ते, पर्य्ये व्यत्ययात् प्री । पच्च दच्च यूषंश्च निट् च पृच्च मास् च आसंश्च स्नुश्च नश्च उदश्च हृच्च असंश्च यकंश्च शकंश्च शीर्षंश्च दोषंश्च ते । शस् आदिर्यस्य सः, शसादिश्च पिश्च तत् तस्मिन्, पुंस्त्वं सौत्रत्वात् । पौ शीर्षे भवः शीर्षण्यः केशः, यूषण्यं हृद्यमित्यादि । क्वौ शसादिष्वेवेति परे (१) । सुपदी, व्याघ्रपदी कुले इति तु ङ-से पादादेशे पात् पत्

---

(१) उक्तञ्च दुर्गादासेन "शसादिपदस्थेन तत्पूर्वविभक्तेर्निरासात् क्लीवे धौकारस्य स्थितेऽपि तस्य न स्यात्" इति ।

पाविति पदादेशः । केचित्तु दीर्घपदी दीर्घदोषणी दीर्घदोष्णी इत्याहुः । घिभिन्नस्यादेरचः पित्वात् (१) । वा शब्दस्य व्यवस्थया क्वचिन्न स्यात्, क्वचिदन्यत्रापि, तेन—

पादस्य पदतदर्थय-हति-कापि-हिमाज्यातिगे वा तु शब्द-घोषमिश्रनिष्के । पादस्य पत् स्यात् अतदर्थये इत्यादौ च, शब्दादौ तु वा । पादाय हितः पद्यः पद्याः, पद्धतिः, पत्कापी, पद्धिमं, पदाजिः, पदातिः, पद्गः । पच्छब्दः, पद्घोषः, पन्मिश्रं, पन्निष्कम् । पदे पादशब्द इत्यादि । अतदर्थय इति किं—पाद्यं पादाय वारिणि ।

ऋचः शसि । ऋक् सम्बन्धिनः पादस्य पत् स्यात् शसि (२) परे । पच्छो गायत्रीं जपति । ऋचः किं—पादशः कार्षापणं ददाति ।

गोपहतयोः पदः । पादस्य पदः स्याद् गोपहतयोः (३) । पदगः, पदोपहतः ।

दन्तशीर्षयोर्दच्छीर्षणौ न तयाचोः । अनयोरेतौ स्तः क्रमादनयोः । दन्ते भवो दन्त्यः, स्थूलशीर्षणोऽपत्यं स्थौलशीर्षिः, मृगशीर्ष्णा युक्ता मार्गशीर्षी तिथिः । अचि किं—शीर्षण्याः केशाः ।

नाम्नि दादिस्थस्योदकस्योदन् धि वास-पेष-वाहने च वा तु

(१) अत्रायमाशय —केचित् पण्डिता यशादिष्वेवेति भाष्ठीकुर्वन्ति, तेषां मते क्लीबे श्वौकारस्यापि पित्वात् तलादेश॰ स्यादिति ।

(२) चशसि प्रत्यये इत्यर्थः ।

(३) गे उपहते च इत्यर्थः ।

भारादौ । दादिस्यस्योदकस्य उदन् स्यात् नाम्नि, ध्यादौ च, भारादौ तु वा । उदकस्य मेघः उदमेघो नाम कश्चित्, तस्यापत्यम् औदमेघिः । उदवाहः, उदपानः कूपः, अनपेक्षितावयवार्था संज्ञेयम् । उदकं धीयते यत्र उदधिः समुद्रः, असंज्ञायामप्युदधिः कुम्भः, उदवासः, उदपेषं शुण्ठीं पिनष्टि चूमलः, उदवाहनः । उदभारः, उदकभारः । भारादिर्यथा—

भारहारौ च वाहश्च विन्दु-वीवध-गाहवः ।
ओदनो वज्रविषयौ (१) गाहो मन्थः प्रकीर्त्तितः ।

अस्यहसादेः पूरयितव्ये वा । अस्यहसादेरुदकस्य उदन् स्याद्वा पूरयितव्ये । उदकस्य कुम्भः उदकुम्भः, उदककुम्भः । स्यहसादेस्तु उदकस्थाली । पूरयितव्ये किं—उदकगिरिः ।

परदस्योदो नाम्नि । परदस्योदकस्य उदः स्यान्नाम्नि । लोहितोदः क्षीरोदः लवणोदः । नाम्नि किं—लवणोदकः कुम्भः ।

नासिकाया नस् तस्-क्षुद्रावर्ण-नगरये । नासिकाया नस् स्यात् तसि क्षुद्रे वर्णनगरभिन्ने ये च । नस्तः, नःक्षुद्रः, नस्यः । वर्णनगरये तु-नासिक्यो वर्णः, नासिक्यं नगरम् ।

. हृदयस्य हृल्लासलेखयोः ष्या-शोक-रोग-शल्ये तु वा । हृदयस्य हृत् स्यात् लासलेखयोः परयोः, वा तु ष्यादौ । हृल्लासः हृल्लेखः । सौहृद्य हृच्छोकः हृद्रोगः हृच्छल्यम् । पक्षे सौहृदय्यमित्यादि ।

पादहन्तेति सर्वं छान्दसमिति परे । अप्रशस्तं निशि स्नानम् । पक्षाग्रमुद्वर्त्तितस्य च । हृदि विनिहितरूपः । दोष्णां बलात्

---

(१) विषय इत्यत्र विरुष इति पाठान्तरम् ।

११८। सदानोऽल्लोपोऽम्वस्यात् पौ वा त्वीङ्योः।

(सदा।१।, अनः ६।, अत्-लोपः १।, अ-म्व-स्यात् ५।, पौ ७।, वा।१।, तु।१।, ईङ्योः ७॥)।

अनोऽकारस्य नित्यं लोपः स्यात् पौ परे, ईङ्योस्तु वा, नतु मस्यात् वस्याच्च परस्य। यूष्णः यूष्णा।

११९। नो लुप् फेऽधौ।

(नः ६। लुप्।१।, फे ७।, अधौ ७)।

नस्य लुप् स्यात् अधौ फे परे। यूषभ्यामित्यादि।

ङौ—यूष्णि यूषणि यूषे। मासः मासा माभ्यामित्यादि।

पक्षे घौ च रामवत्। पदादयः पृथक्शब्दा इत्येके।

---

मन्यबलं गरीयः। निशुपस्यास्य सुष्टस्य पीते यूष्णि निरामय इत्यादिप्रयोगदर्शनात् भाषायां ग्रन्थकृता कृतम्।

११८। सदा। अतो लोपोऽल्लोपः, म च व च म्व, म्व च तत् स्यचेति म्वस्यः, न म्वस्यः अम्वस्यस्तस्मात्, ईश्च ङिश्च तौ तयोः। औक्ष्णः पौष्णः धार्त्तराज्ञ इत्याद्यनेनैव सिद्धे ष्णपनष्टतराज्ञामिति सूत्रमेवं ज्ञापयति, ताद्धे सर्व्वत्र अनो नाकारलोप इति, तेन राजन्यः मूर्द्धन्य इत्यादि सिध्यति। पूर्व्व वाधिकारनिहत्यर्थं सदेति, (१) अन्यथा अरसादेशः पदाद्यादेशाश्च नित्य स्युरित्यर्थः।

११९। नो। न इति प्रकृतिनान्तस्य नः। लेरधिकारात् लेरेव। तथाच प्रकृतिनान्तस्य ले नस्य लुप् इत्यर्थः, तेन राजा

---

(१) "केचित्तु सदेति सुप्स्वते गौणत्वे चेत्यर्थः, तेन पूजितपूष्णः पीतयूष्ण इत्यादि इत्याहु"—का वि।

१२० । सङ्ख्या-वि-सायाद्वाङ्गोऽहन् ङौ ।

(सङ्ख्या-वि-सायात् ५।, वा, ।१।, अङ्गः १।, अहन् ।१।, ङौ७।) ।

सङ्ख्या-वि-सायेभ्यः परस्याङ्ग इत्यस्य अहन् वा स्यात् ङौ ।

द्व्यह्नि द्व्यहनि द्व्यङ्के, व्यह्नि व्यहनि व्यङ्के, सायाह्नि सायाहनि सायाङ्के ।

विश्वपाः विश्वपौ विश्वपाः, विश्वपां विश्वपौ ।

१२१ । धोरा लोपोऽच्यघौ ।

( धोः ६।, आ ।६।, लोपः १।, अचि ७, अघौ ७। ) ।

धोराकारस्य लोपः स्यात् अघावचि परे । विश्वपः, विश्वपा विश्वपाभ्यामित्यादि । एवं शङ्खधादयः । धोः किं—हाहाः हाहा हाहाभ्यामित्यादि । शेषं विश्वपावत् । हरिः ।

---

स्थानी यूषभ्यामित्यादौ स्यादेव । न तु प्रशान् भवान् भवन् अहन्नित्यादौ । कथं सुवनमाचक्षाणः सुवन्नित्यादौ लुप् न स्यादिति, उच्यते, अकारस्थानिवद्भावात् । परैकदेशिनः (१) पदादयोऽपशब्दा इत्याहुः । ये तु पदादयः पृथक् शब्दा इति वदन्ति तेषां मते पत् पदौ पद इति भवन्ति ।

१२० । संख्या । संख्या च विश्च सायश्च तत् तस्मात् । अङ्ग इति सर्व्वैकदेशसंख्यातसंख्याव्यादित्यादिष्टाङ्गः, पथे मौ । द्व्यह्नीति ङौ अहन्नादेशे वा अल्लोपः । पक्षे द्व्यहनि इति । उभयत्वाभावपक्षे द्व्यङ्के । एवमन्यत्र ।

१२१ । धोरा । आ इति लुप्तषष्ठीकं दम् । न चिरधि-

---

(१) केचित् पण्डिता इत्यर्थः ।

१२२ । युङ्यामौ यू ।

( युङ्याम् ५॥, औ ।१।, यू २॥ ) ।

इकारोकाराभ्यां परं औ क्रमादिकारोकारौ प्राप्नोति । हरी ।

१२३ । गुर्धि-जस्-ङित्सु ।

( गुः १।, धि-जस्-ङित्सु ७॥ ) ।

---

स्तस्मिन्, अञ्-विशेषणम् । अर्थलाघवात् पाविति न कृतं, तथाहि पेरप्यच्युताद्येपप्रकृतिकत्वेन विलम्बप्रतिपत्तिकत्वादाह अयवाविति । "तद्धेतोरेव तदस्तु किं तेन" इति न्यायात् क्वचित् शब्दलाघवादर्थलाघवोऽपि न्याय्य इति । विश्वप इति विश्वं पातीति पाधोः क्विप् । एवं सोमपः । तातं तायते इति तातताः तान् तातत: । हाहा इत्यव्युत्पन्नपक्षमाश्रित्य इदमुक्तम् । हाशब्दं जहाति इति व्युत्पत्त्या हाह इति । केचित्तु ब्राह्मणवाचकस्य आशब्दस्यापि अः पश्य, ए देहि, इ विरमति (१) । अस्मन्मते तु आः पश्य, ऐ देहि, ए विरमति इत्यादि । कथं ह्यो यंप् से इति ? सौत्रत्वात् । (२)

१२२ । युङ्याम् । इश्च उश्च तौ, ताभ्यां तमितं करोति । अवयवापेक्षया इम् । इह लाक्षणिकयुतोऽपि ग्रहणात् अतिस्त्री चित्रगू इत्यादि स्यात् । यू इति द्वौदम् ।

१२३ । गुर्धि । ङ इत् येषां ते ङितः । धिश्च जश्च ङितश्च

---

(१) विरमतीति यवन्त सप्रश्यन्त पदम् ।

(२) आवन्तभिन्नानामप्याकारलोप इति वार्त्तिकम् । अतएव आचार्येण तन्मतमवलम्ब्य आदनञ ह्यो यम्से इत्यादौ ह्यादिशब्दस्याप्याकारो लुप्त इति दुर्गादास ।

इदुतो गुः स्यात् घौ जसि ङिति च परे। हरयः।
त्यलोपे त्यलक्षणम्। हे हरे। हरिं हरी हरीन्।

१२४। टादसश्चास्त्रियान्तु ना।

( टा।१।, अदसः ५।, च।१।, अस्त्रियां ७।, तु।१।, ना।१। )।
इदुद्भ्यामदसश्च परष्टा ना स्यात्, नतु स्त्रियाम्।
हरिणा हरिभ्यां हरिभिः, हरये हरिभ्यां हरिभ्यः।

ते तेषु। ङित इति जस् साहचर्य्याद्दलाद्यपित्कस्यैव (१) ग्रहणं, तेन मत्यै सख्ये इत्यादौ न स्यात्। इदुद्भ्यां विहितेषु घिजस्ङित्सु गुरित्यर्थः। तेन हे अतिनदे हे चित्रगो इत्यादौ स्यात्। न तु हे नदि हे सुभ्रु इत्यादौ। यत्तत् सम्भवदन्ति कुक्कुटाः। सुतनु सत्यमलङ्करणाय ते इत्यादौ तु हे से पुनस्तन्वादित्वादूपि सुभ्रू हीत्यनेन ह्वः। (२)

१२४। टा। न स्त्री अस्त्री तस्याम्। अदोग्रहणं सर्व्वकार्य्यानन्तरं मात्वघौत्वे च इति ज्ञापनार्थं, तेन अमुष्मै अमुये इत्यादि स्यात्। हिलिङ्गस्य तु यदा पुंस्येव वृत्तिस्तदा स्यादेव, तेन पटुना पुंसा इत्यत्र स्यात्, न तु पट्वा स्त्रिया इत्यादौ।

(१) साक्षात् ङित एवेत्यर्थः।

(२) त्यलोपे इत्यादि। येन केनापि सूत्रेण प्रत्ययलोपे प्रत्ययलक्षणं कार्यं स्यादिति। यथा राजा इत्यादौ सेर्लोपे दीर्घः। एवं ग्रामणीः ग्रामणि इत्यादौ सेर्नुक् चेति सुपसूत्रेण विभक्तेर्लोपे कृते विभक्त्यन्तविहिता पदसंज्ञा सिद्धा इति दुर्गादासः।

प्रत्ययलक्षणमिति कार्य्यविशेषणम्। तथाच सू. प्रत्ययलोपे प्रत्ययलक्षणमिति पाणिनिः, अर्थात् प्रत्ययस्य लोपे तन्निमित्तं परे विहितं यत्कार्य्यं तद्भवतीति। का-वि।

१२५। ङसेङो लोपः।

( ङस ६।, एङः ५।, लोपः १। )।

एङः परस्य ङसिङसो ङँस्य लोपः स्यात्।

हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्।

१२६। युद्भ्यां ङे ड़ौः।

( युद्भ्यां ५॥, ङेः ६।, डौः १। )।

इदुद्भ्यां परस्य ङेर्डौः स्यात्, ङ इत्।

---

१२५। ङसे। एङो ग्रहणं सामान्यस्यैङः प्राप्त्यर्थं, तेन ते. दे: गोः द्योः मह्नोः स्मृतोरित्याद्यपि स्यात्(१)।

१२६। युद्भ्यां ङेः। युद्भ्यामिति पूर्व्ववत्। युता ङेरौ इति क्षते हरौ शम्भाविति सिद्धं भवति, एवं सति विशतेस्ते-स्त्वडावित्यडौ ग्रहणं विनापि विंशताविति च सिध्यति, तथापि डौ करणं, येन विधिस्तदन्तस्येति न्यायात् प्राप्तसमुदितादेश-निवृत्त्यर्थम् (२)। अथवा लोपस्वरादेशयोः स्वरादेशो विधि-र्बलवान् इति न्यायात् व्य-सख्यिशब्दस्य सख्यावित्यनिष्टवार-णार्थम्। कामवाचिन इशब्दस्य तु आद्यन्तवदेकस्मिन्निति न्यायात् औ इति।

---

(१) ते. दे. इति तेङ्ङ देवने, देङ्ङ च देवने इत्यनयोः क्विपि रूपम्। मह्नाश्चासौ उयेति मह्नो। स्मृत उयेन स स्मृतो।

(२) इकारोकाराभ्यां सहितस्य ङेरित्युक्तौ इकारोकारान्तशब्दसहित स्यैव ङेरौकारप्रसक्तिनिवृत्त्यर्थमित्याशयः।

१२७। टे र्लोपो डिति विंशतेस्तेस्त्वडौ ।

( टेः ६।, लोपः १।, डिति ७।, विंशतेः ६।, तेः ६।, तु ।१।, अडौ ७। ) ।

डिति परे पूर्व्वस्य टे र्लोपः स्यात्, विंशते स्तेस्त्वडौ ।

हरौ हर्य्योः हरिषु। एवं श्रीपत्यग्निरव्यादयः ।

१२८। सख्यृद्भ्यां सौ ड्धिः ।

( सख्यृद्भ्यां ५॥, सेः ६।, डा ।१।, अधेः ६। ) ।

सखिशब्दात् ऋकारान्ताच्च परस्य से र्डा स्यान्न तु धेः ।

सखा। अधेः किं—हे सखे ।

१२९। घौ त्रिः। ( घौ ७।, त्रिः १। ) ।

सख्यु ऋंकारस्य च त्रिः स्यादधौ घौ परे ।

सखायौ सखायः, सखायं सखायौ सखीन् ।

---

१२७। टेर्लोपः। न डिरडिस्तस्मिन्। विंशतस्तेस्त्वडा-विति, डौ विंशतो पूर्व्वेण (१) टिल्लोपः। डिभिन्ने डिति तेर्लोपः। यथा—विंशः, विंशतिमाचष्टे विंशयति इत्यादि। (२)

१२८। सख्यृत्। सखा च ऋश्च तौ ताभ्याम्। नधिरधि-स्तस्य। अधेरिति पृथक्-दकरणात् क्वचिन्न स्यात्, तेन अर्ज्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्ज्जुन इति भारते। आर्षमित्यन्ये।

१२९। घौ। पूर्व्वसूत्रादधेरित्यनुवर्त्तते ऋत्साहचर्य्यात्, तेन हे सखे इत्यत्र न त्रिः।

---

(१) पूर्व्वेण चास्य सूत्रस्य पूर्व्वांशेनेत्यर्थः।

(२) डिवर्ज्जनात् तद्धित एव प्रवृत्तं न त्यादिष्वस्य, तेन विंशतिमाचष्टे

१३०। सख्युटाङितामा-ए-उसुसौ।

( सख्युः ५।, टा-ङितां ६॥, आ ए उस् उस् औ ।१॥ )।

सख्युः परेषां टा-ङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युः। सख्या सख्ये सख्युः सख्युः सख्यौ। शेषं हरिवत्।

१३१। पत्युरसे। ( पत्युः ५।, असे ७। )।

पतिशब्दात् परेषां टाङितां स्थाने आ ए उस् उस् औ एते

---

१३०। सख्युः। ङ इत्येषां ते ङितः, टाश्च ङितश्च ते तेषाम्, आश्च एश्च उश्च उश्च औश्च ते, सौत्रत्वाज्जसो लुक् वि-सन्ध्यभावौ च। सख्या सख्ये सख्युः सख्युः सख्यौ। सख्यौ इत्यत्र लाक्षणिकत्वात् न णः। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इत्युक्तेः सखिना वानरेन्द्रेणेति। भाष्ये तु गौणेऽपि अतिसखा अतिसखायौ अतिसख्या इत्याद्युक्तम्। न्यासे तु सख्यर्थप्राधान्य एव, तेनातिसखिः अतिसखी अतिसखिना इत्यादौ न स्यात् इत्युक्तमिति। (१)

१३१। पत्युः। न सः असस्तस्मिन्। पतिना नीयमानायाः पुरः शुक्रो न दुष्यति। गते मृते प्रव्रजिते क्लीबे च

---

विंशतयतीत्यादौ ङिभिन्नेऽपि अतिदिष्टत्वात् न तिलोप, किन्तु सामान्यङिति टिलोप एव इति। का-वि।

(१) "स्त्रियान्तु नित्येनन्तत्वात् सखी सख्यौ सख्य इत्यादि गौरीवत्। क्लीबेऽस्य न प्रयोग तथाच—सखा मित्रे सहाये ना वयस्यायां सखी मता इति मेदिनी। यत्तु अहो पिपासुत्वं तव स्वजिह्वत न स्वरस सख्या वयसाप्यनेन इति नैषधे वयसा इत्यस्य विशेषण सख्या इति, तत्पुंस्त्वेन अजहल्लिङ्गत्वात्। अतएव हेतुस्तद्‌ब्रह्मवर्चं समिति रघु."—इति दुर्गादास।

क्रमात् स्यु र्नंतु से । पत्या पत्ये पत्युः पत्युः पत्यौ । असे किं-- श्रीपतिना इत्यादि । शेषं हरिवत् । कतिशब्दो ब्यान्तः ।

१३२ । डतिसङ्ख्याष्णो जस्शसो लुक् ।

( डति-संख्या-ष्-ण: ५।, जस् शसोः ६॥, लुक् ।१। ) ।

डत्यन्तात् षान्त-नान्त-संख्यायाश्च परयो र्जस्शसो र्लुक् स्यात् । कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु । एवं यति तति ।

डति-ब्य-ष्णान्तसंख्यास्मद्-युष्मदः सदृशास्त्रिषु ।

त्रयादयः संख्याशब्दा ब्यान्ताः ।

---

पतिते पती । पत्यौ जीवति या नारी उपोष्य व्रतचारिणी । आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत् ॥ दुहितुः पती । सीतायाः पतये नम इति पूर्ब्ववत् (१) । छान्दसमिति परे ।

कतिशब्दो ब्यान्त इति । अनियितबहुत्वविशेषार्थकत्वात् इति भावः ।

१३२ । डति । ष च न च ष्णा, संख्या चासौ ष्ण चेति संख्याष्ण, डतिश्च संख्याष्ण च तत्तस्मात् । डतिर्डत्यन्तः, संख्याष्ण षान्त नान्त संख्या इत्याह डत्यन्तादित्यादि (२) ।

डतिब्य । डतिश्च ब्यश्च ष्णान्तसंख्या च युष्मच्च अस्मच्च ते ।

---

(१) पूर्ब्बवत् सखिना वानरेन्द्रेणेतिवत् ।

(२) एभ्यः क्रोधेऽपि कति कर्माणि षट् कर्माणि पञ्च सूत्राणि इत्यादौ जस्-शसोः शिं बाधित्वा लुगेव । अतो षट् कर्माणि इत्यादौ ङो लुक् न स्यात् । न च निमित्तगतविशेषतो निमित्तगतविशेषस्य बलवत्त्वात् कर्म्माणि इत्यादौ यथा त्रिसंज्ञां विकृतमिकारादेर्न बाधित्वा जस्शसोरित्यनेन शिः स्यात् तथात्रापि निरदेशात्

१३३ । त्रेस्त्रयङ् नामि ।

( त्रेः ६।, त्रयङ् ।१।, नामि ७। ) ।

त्रिशब्दस्य त्रयङ् स्यात् नामि परे, ङित्त्वादन्त्यस्य स्थाने । त्रयाणां त्रिषु । द्विशब्दो द्वान्तः ।

---

ष्णान्तः पूर्व्ववत् । त्रिषु लिङ्गेषु सदृशाः समानरूपाः, एषां लिङ्ग-कृतप्रयोगवैलक्षण्यं नास्तीत्यर्थः(१) । डति-च ष्णान्तसंख्यानां मुख्य एवायं नियमः, पूर्व्वसूत्रेण ष्णात्लुक् ङ्सेरित्यनेन च मुख्य एव लुग्वि-धानात् । तेन प्रियकतीनि सुखस्त्रीणि प्रियपंचि प्रियपञ्चानि कुलानीत्यादौ न स्यात् । य-चे तु प्रियकति इत्यादौ स्यादेव । एषां त्रलिङ्गत्वात् प्रियाः पञ्च स्त्रियो यस्य प्रियपञ्चा युवा इत्यादौ पुंवद्भावः ।

त्राद्य इति । त्र्यादीनामेकत्वद्वित्वाबोधकत्वात् बह्वेव । अयं नियमस्त्वष्टादशशब्दपर्य्यन्तो, विंशत्यादेः त्वविधानात् ।

१३३ । त्रेः । आमीत्यकरणात् क्वचिन्न स्यात् । तथाच त्रीणामपि समुद्राणां युगान्ते तु समागम इति वृहत्तिङन्तः । मुख्यस्यैवायं विधिस्तेन अतित्रीणाम् । अन्ये तु गौणेऽपि अति-त्रयाणामित्याहुः ।

---

(१) एषा पुंस्त्रीनपुंसकलिङ्गविहितकार्य्यं नास्तीत्यर्थः । अतएव युष्मदस्मद्भ्यां शसो नकारं विधास्यति । एवं कति स्त्रिय इत्यत्र पाञ्चोषादीत्यादिना ईप् न स्यात्, पञ्च स्त्रिय इत्यत्र च नान्तत्वादीप् न स्यादिति । न च निमित्तगतविशेषतो लिङ्गगतविशेषस्य बलवत्त्वात् सर्व्वाणि इत्यादौ यथा क्लिबत्वादिविहितमिकारादेश बाधित्वा जस्शसोरित्यनेन शिः स्यात् तथात्रापि शिरेवास्तु इति वाच्यं,

## १३४ । त्यदां टेरः क्वौ ।

( त्यदां ६।।।, टेः ६।, अः १।, क्वौ ७। ) ।

त्यदादीनां टेरकारः स्यात् क्वौ परे ।

द्वौ द्वौ, द्वाभ्यां द्वाभ्यां, द्वयोः द्वयोः ।

यातप्रमीः यातप्रम्यौ यातप्रम्यः ।

---

१३४ । त्यदाम् । त्वनिर्देशो हि गणार्थः, सिसंज्ञस्यैव ग्रहणात् । अतितत् विप्रः, अतितत् स्त्री, अतितदी कुले इत्यादौ न स्यात् । सूत्रे टेरत्वाभावः सौत्रत्वात् । दभौ यौ इत्यत्र भाव्यमानः(१) अक् यँ न गृह्णाति इति ज्ञापकात् अकारस्यानित्त्वेऽपि न यँग्राह्यकत्वम् । प्रकरणात् क्वाविति प्राप्ते क्विग्रहणात् युष्मदस्मदोर-तसि गौणेऽपि स्यात्, (२) द्विशब्दस्य तसि न स्यात्, तेन अतित्वान् अतिमान् इत्यादौ स्यात्, न तु त्वत्तः मत्तः द्वित इत्यादौ ।

---

अनित्यत्वान्न इत्यादिना इत्यमादीनां सिद्धत्वे साम्यनियमेन लिङ्गविहितकार्य-निषेधादिति दुर्गादासः ।

(१) भाव्यमान उत्पाद्यमान आदेशः प्रत्यय इति यावत् ।

(२) युष्मदस्मदोर्गौणेऽपि टेर स्यात्, मुख्ये तु तसि प्रत्यये परे न स्यादित्यर्थः ।

अत्र कार्त्तिकेयसिद्धान्तः 'न च त्यद्वो ङः क्वाविति वाच्यम्, न इत्यादौ तद्-शब्दस्य पकारव्यवधाने सत्वाभावादनिष्टापत्तेः । टेर्विहिताकारस्य प्रकृतिभक्तत्वात् सत्वं स्यादेव । ननु त्यदां टङ् क्वाविति कृते प्रकृतिभक्तत्वात् सत्वादिकार्यं भवितुमर्हति कथमेतद्गौरवमिति..... तद्रूपस्य अनधिकफलमाचष्टे इति न्यायात् त्यदादीनां मध्ये युष्मदस्मदोर्गौणे विसंज्ञाभावेऽप्यत्वविधानार्थमित्याह । अत्र प्रकरणादेव क्वावाप्तौ क्विग्रहणं, विद्यमानविभक्तेरप्यात्वमकारस्य च प्राप्त्यर्थम् । तेन न तौ ते दत्तः मत्तः इत्यादि । अतएव द्वियुष्मदस्मदो न तसीति चक्रस्यात् निषेधः सङ्गच्छते' .... इत्याह । त्यदां टङ् क्वौ इति पाठे कृते तत्प्रक्रियालाघवं बाधमिति कश्चित् ।

१३५ । यूतोऽम्शसो म्नावदीधोः ।

( यूतः ५।, अम्शसोः ६॥, म्नौ १॥, अदीधोः ५। ) ।

दी-धुवर्जादीदूदन्तात् परयोरम्शसोः स्थाने क्रमात् म-नौ स्तः। वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्यामित्यादि । एवमतिलक्ष्म्यादयः (१) । सुधीः ।

१३६ । धोरियुवचि ।

( धोः ६।, इय्-उव् ।१।, अचि ७। ) ।

धोरीदूतोः स्थाने क्रमादियुवौ स्तो ऽचि परे ।

सुधियौ(२) सुधियः इत्यादि। एवं सुश्री यवक्रादयः । प्रधीः।

---

१३५ । यूतः । ईश्च ऊश्च तौ, ताभ्यां तमित करोति, यूत् तस्मात्, अम्च शश्च तौ तयोः, मश्च नश्च तौ, दीश्च धुश्च तत्, न तत् अदीधु तस्मात्, पुंस्त्वं सौत्रत्वात् । वातप्रमीमिति वातशब्दात् प्रपूर्व्व मा-धोः कोः । एवं कर्कन्धूं कर्कन्धून्, जरयमीणादिकः । केचित् स्त्रियामीपि दीसञ्ज्ञत्वात् वातप्रमीं वातप्रमीः, अपि कर्कन्धूं कर्कन्धूः इत्याहुः ।

१३६ । धो । इय च उव् च तत् । पूर्व्वतो यूत इति श्लिं

---

(१) एवमतिलक्ष्म्यादय इति । यूत स्त्रेश्च इत्यत्र एवकारेण नित्यस्त्रीलिङ्ग शब्दस्य नदीसञ्ज्ञा विहिता अत्र तु प्रयोगात पाक्षिकत्वेन नदीसञ्ज्ञाभावात् धातुत्वा भावाच्च वातप्रमीशब्दवदेषां रूपमिति । भाष्यकारक्रमदीश्वरौ [illegible] प्रयोगेऽप्येषा नदीत्वमङ्गीकृत्य सर्व्वविभक्तिषु स्त्रीलिङ्गनदीराजवत्त्व रिति । का थि ।

आदिशब्दात् अतितन्त्री बहुश्रेयसीत्यादय । ऊकारान्तेषु इह अतिचमू. अतिवधूप्रभृतय ।

(२) शोभना धीर्य्यस्य स सुधी, क्विबन्तत्वादस्य धातुत्वं वर्त्तते। विचक्विबन्तो हि धातुत्व जहाति न जहाति वेति वचनात इति । का। ख।

१३७ । कव्याद्यनेकाचोऽस्यादद्दृन्पुनर्वर्षाकाराद्यन्यभूसुधियोर्य्वौ ।

(कव्याद्यनेकाचः ६।, अस्यात् ५।, अहन्—सुधियोः ६॥, य्वौ १॥)।

। कादे र्व्यादेरनेकाचश्च धो रीदूतोरस्यात् परयोः क्रमात् यवौ स्तः अचि परे, नतु दृन्भू-पुनर्भू-वर्षाभू-काराभूभ्योऽन्यस्य भू-शब्दस्य सुधियश्च । प्रध्यौ प्रध्यः इत्यादि । एवं दीध्यादयः ।

कव्याद्यनेकाचः किं—शुद्धधियौ । अस्यात् किं—यवक्रियौ । नीः नियौ ।

---

विपरिणम्यानुवर्त्तयन्नाह ईदूतोरिति । एवं सुश्री-यवक्रादय इति । आदिशब्दात् इमिच्छति इति क्विप्. ईः इयौ इयः, एवं उमिच्छति इति ऊः उवौ उवः इत्यादि । प्रकरणात् क्विरस्येव, तेन सुध्यर्थं इत्यादौ न स्यात् (१) ।

क्रोश्चोरादिडसोर्य्वां । क्रिय आदौ श्रुवोऽडसि इयुवौ वा स्तः । क्रियादिः क्रादिः श्रुव. श्वोः । अनुकरणादित्यन्यः ।

१३७ । कंच व्यंच कव्यं, कव्यमादिर्यस्य सः, कव्यादिश्च अनेकाच्च तत्तस्य, न स्यः अस्यः तस्मात्, दृंश्च पुनश्च वर्षाश्च काराच ता आदयो यस्य सः, तस्मादन्यः दृन्पुनर्वर्षाकाराद्यन्यः, स चासौ

---

(१) सुध्युपास्यः पुंवदित्यादौ इयादेशाभावं दर्शितवताचार्य्येण यत्वापीति स्यादे रेवेति ज्ञापितं, सामान्यशब्दोऽपि क्वचिद्विशेषपरो भवतीति न्यायात् ।..... किञ्च ज्ञापकसिद्धमनित्यमिति न्यायात क्वचिदन्यत्रापि भवति, तेन तराधाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदासः । विशेषविधित्वाद्दीर्घस्यापि बाधकोऽयं, तेन ड्डौ सुधियि इत्येव इति दुर्गादास ।

भूयेति, पश्चात् स च सुधीश्च तौ, दृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ, न तौ अदृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ तयोः। यच वच तौ। धोरिति धोरवयवभूतयोरित्यर्थः। नत्वित्यादि, दृन्निति हिंसार्थ्यं तस्माद्भुधोः क्विप्, दृन्भूः स्त्री सर्पचक्रयोरिति दकारादौ मेदिनी। दृन्भूः स्त्री कुलिशे चक्रे दृन्भूः स्त्रीपुंसयोरहाविति दकारादौ विश्वः। दन्भेरूप्रत्ययेन निपातितमिति भाष्यम्। कारास्थाने करं पठित्वा करभूः करभ्वौ करभ्व इत्यादि। एकदेशविकृतमनन्यवद्भवतीति न्यायात् कारभ्वौ इति केचिदाहुः। एयामियुवोदूङ्गित्वात् स्त्रियां दीसंज्ञायां दृन्भ्वै दृन्भूनां काराभ्वै काराभूणामिति।

यदा स्याद्युत्पत्तेः प्राक् समस्तत्वेवायं विधिरिति भाष्य, तेन ईषद्भिय. कुधियः अभियः धर्म्मधियः नानाधियः दात्रलुवा, वृश्चिकभिया पलायमानस्याग्नौविषमुखे निपात इत्यादौ स्याद्यन्तेन से न स्यात्। वृश्चिकभियेति सम्बन्धे षो-विवचयेति चान्द्राः। व्यानां मध्ये गैरेव विधानादीषद्भिय इत्यादौ न स्यादित्यन्ये। वस्तुतस्तु दृन्पुनर्वर्षाकाराभ्वसुधीकव्याद्यनेकाचोऽस्याद् य्वौ इत्य-करणात्, उत्सर्गत्वाद्वा ईषद्भिय इत्यादौ न स्यात् (१)। दीध्यादय

---

(१) दृन् हिंसा तदर्थं भवतीत्यर्थं। एषा लिङ्गार्थनिर्णयस्तु, दृन्भू स्त्री कुलिशे चक्रे दृन्भू स्त्रीपुंसयोरहाविति विश्वप्रकाशात्। पुनर्भू स्यात् द्विरूढाया दृन्भू पन्नग-वज्रयोः। पुनर्भवाया वर्षाभू स्त्रिया किञ्जुलुके भ्रजे। काराभूर्निगडस्थाने क्रियाया मपि चेष्यते इति कोषाञ्च। केचित्तु कारास्थाने कार पठित्वा कारभ्वौ कारभ्व इत्युदाहरन्ति। तथाच काराश्चेष्यते इति वामन.। वर्षादृन्पुन काराद्भुव इति चान्द्रा। कारशब्दो घञन्तो दृत्तौ भाष्ये च दृश्यते इति रचितश्च। कारस्थाने

## १३८। न्याप्दीभ्यो ङेराम्।

(नी-आप्-दीभ्यः ५।।।, ङेः ६।, आम्।१।)।

नीशब्दादापो द्याश्च परस्य ङे-राम् स्यात्। नियाम्। शेषं सुधीवत्। अग्रणीः अग्रण्यौ। ङौ-अग्रण्याम्। शेषं प्रधीवत्।

---

इति। दीधीधोः क्विप्। दिधिष्वादय इति लिपिकरप्रमादः। यतो दधिपूर्व्व-स्यतेरूत्वे निपातनमिति (१)। आदिना नारीवाचरती नार्य्यौ विप्रस्य, मानमिच्छति मान्यः, सखेवाचरति सख्ये इत्यादिसंग्रहः। अवयवस्त्रीत्वान्नार्य्यौ इति भाष्यम्। शुद्धधियाविति शुद्धा धीर्ययोरिति वाक्यम्।

१३८। न्याप्। नीश्च आप्च दीच ताः ताभ्यः। नीत्यस्य गौणागौणग्रहणं, तेनातिनिया प्रियनियामित्यादि। अग्रण्यामिति अग्रे नयतीति क्विप्, णत्वेऽपि एकदेशविकृतमनन्यवद्भवतीति

---

करं पठित्वा करभ्वौ करभ्व इत्यपि केचित्। हन्वादीनां हृदुपस्थानभिन्नानां नित्यस्त्रीत्वाहीघप्रायामारो तुमागमे हन्भूनामित्यादि। किन्तु हन्भूशब्दस्य सर्व-नामिनि पाक्षिकस्त्रीत्वाहीघप्राभावे हन्भूनामिति। अत्रापि यवोति स्यादेव तेन प्रधीश्वर इत्यादौ न प्रवृत्त इति दुर्गादासः। कारापूर्व्वस्यापीति काशिका। ६।४।८४।

प्रकृष्टा धार्य्यस्येति व्युत्पादितस्य इं मिद्धप्रधीशब्दस्मात् यकारविधानेन "शुद्धी' प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीमच्छ्रीव दिति बहुभाषवचनेन च यदा स्याद्यलसेः प्राक् मतद्वैयावं विधिरिति मतमवाहतमाचार्य्येणेति। ईषद्भिय इत्यादौ तु कचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायाद यत्वो स इति केचित्।

(१) दध धारणे इः। दधिं धैर्य्यं स्यति, अव्ययादित्वादुत्मत्वे गुर्डन्तात् निपातिता इत्यमरटीका।

१३८ । त-तज-खादीयो ङोर्वोः ।

( त-तज-खात् ५।, ईयः ५।, ङः १।, वा ।१।, उः १।) ।

तात् तस्मानजाद्वर्णात् खाच्च परादीकारजात् यकारात् परो ङसिङसो र्ङं उः स्याद्वा । सुत्युः सुत्यः । लून्युः लून्यः । सुख्युः सुख्यः ।

शम्भु र्हरिवत् साध्यः ।

शम्भुः शम्भू शम्भवः, शम्भुं शम्भू शम्भून्, शम्भुना शम्भुभ्यां शम्भुभिः, शम्भवे शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भ्वोः शम्भूनां, शम्भौ शम्भ्वोः शम्भुषु । हे शम्भो ।

एवं विष्णु-वायु-भान्वादयः ।

---

न्यायादाम् । एवं ग्रामण्यामित्यादि । बहुग्रामणिनि कुले इत्यादौ परत्वान्नुण्, पुंवद्भावपक्षे तु स्यादेव (१) ।

१३८ । ततज । ताज्जायते तजः, तश्च तजश्च खश्च तत्तस्मात्, ईयो यः (२) ईयस्तस्मात् । प्रकरणात् कव्यादीत्यनेन कृतयस्यैव ग्रहणात् सख्याः इत्यादौ न स्यात् । सुत्युरिति सुतमिच्छति सुतीयतीति क्विप् य्वोर्लोपोऽहसीत्यनेन यलोपः, अनेकाच्त्वात् पूर्व्वेण यः अनेन उः । लून्युरिति लूधो क्तस्तस्य नः, शेषं पूर्व्ववत् । एवं क्षाम्युः प्रस्तीम्युरित्यादि(३) । पक्षे सुत्य इत्यादि । वेति नेच्छन्ति परे ।

---

(१) आमिति शेषः ।

(२) धोरीकारस्थानजातो य इत्यर्थः । अत्र मण्डूकप्लुताधिकारात् धोरित्यनुवर्त्तते इति दुर्गादासः ।

(३) क्षै क्तस्य म क्षाम, प्रपूर्व्वस्त्यै-धो क्तस्य म प्रस्तीम, तमिच्छतीति क्विप्, पश्चात् क्षामी प्रस्तीमी शब्दयो र्ङसि रूपम् ।

## १४०। क्रोष्टोस्तुनस्तृन्नधौ घौ स्त्रियाञ्च।

(क्रोष्टोः ६।, तुनः ६।, तृन् ।१।, अधौ ७।, घौ ७।, स्त्रियां ७।, च।१।)।

क्रोष्टुशब्दस्य तुनः स्थाने तृन् स्यात् अधौ घौ परे स्त्रियाञ्च, न इत्।

(१२८) सखृस्रद्धामिति। क्रोष्टा, हे क्रोष्टो। (१२८) घौ त्रिरिति। क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ।

---

१४०। क्रोष्टोस्तुनः। न धिरधिस्तस्मिन्। गौणेऽपि बहु-क्रोष्टूणि वनानि, अत्र हेऽपि धृतः क इति क्लीन स्यात् पूर्व्वावस्थाया-मृदन्तत्वाभावात्। बहवः क्रोष्टारो यस्यामित्यादौ तृणि ऋदन्तात् गर्भवद्धीपि बहुक्रोष्ट्री पुरी इत्यादि (१)। स्त्रियामित्युक्तेः क्रोष्ट्रीः क्रोष्ट्रा क्रोष्ट्रीभ्यामित्यादि। एवं पञ्चभिः क्रोष्ट्रीभिः क्रीतमित्यत्र तार्थे गौ स्त्रीत्यस्य लुकि पञ्चक्रोष्टु वनं पञ्चक्रोष्ट्रा भृत्येनेत्यादि(२)। पूर्व्वस्य नित्त्वात् समुदितस्यैवादेशः (३) अन्त्यस्य नित्त्व घावस्तस्त-त्वण इति णनिषेधार्थम्।

---

(१) गौणेऽपि बहुक्रोष्ट्री पुरित्यादौ अवयवस्य पुंस्त्वेऽपि समुदायस्य स्त्रीत्वात् तृजादेशे ईर्विति —का वि।

(२) "एवं पञ्चभि क्रोष्ट्रीभि क्रीतमिति वाक्ये तार्थविषये द्विगौ कृते यद्यपि इति ईपोऽलोपे गर्भवत्त्व इत्यादिना अधिकृतत्वलोपे समुदायस्य स्त्रीत्वात् तथा नित्यत्वो अवयवस्त्रीत्वात् तृणि पञ्चक्रोष्टु इति —का-वि।

(३) क्रोष्टोस्तुनस्तृन् इत्यत्र तुनस्तृन् इति अवयवनिर्द्देशात् पूर्व्वस्येति। पूर्व्वस्य तुन। समुदितस्यैव तुनस्थाने एव तृनादेश, अन्यथा तृनो नित्वादन्ते एव स्यादिति।

१४१ । **वाच्यघौ ।** (वा ।१, अचि ७।, अघौ ७।)।

क्रोष्टोस्तुन स्तृन् वा स्यात् अघाद्यचि परे। क्रोष्टृन्(१) क्रोष्ट्रा ।

१४२ । **ऋतो डोङुः ।** (ऋतः ५।, डः १।, ङुः १।)।

ऋकारात् परो ङसिङसो र्डो ङुः स्यात्, ङ इत् ।

क्रोष्टुः क्रोष्टुः क्रोष्ट्रोः क्रोष्टृणाम् ।

---

१४१ । वाच्य । न घिरघिस्तस्मिन् । अस्योपादान स्वमौजसो निषेधार्थं, न तु घिसामान्यस्य,(२) तेन बहुक्रोष्टुनी वने इत्यत्र न स्यात् । वा षाविति सूत्रिते क्रोष्टौ साधुरित्यत्र ऋद्रो ये इति क्रोष्ट्रा इत्यनिष्ट स्यात् । अत्रापि गौणे बहुक्रोष्ट्रा बहुक्रोष्ट्रा पूर्यां इत्यादि । क्रोष्टृन् क्रोष्टृणां इति चान्द्रास्तन्मतमवलम्ब्य क्रोष्टृन् क्रोष्टृणा इति । इदं नेच्छन्ति परे । कृताकृतप्रसङ्गी यो विधिः स एव नित्य इति न्यायात् (३) आदौ नकारनुमौ, तयोर्नादेशस्तेन क्रोष्टून् क्रोष्टूनामित्यप्याहुः ।

१४२ । ऋत । ङ इति पौव्यत्यये प्रौ । ङुरिति ङित्त्वात् टिलोपः ।

---

(१) साम्प्रत प्रचरत्सु बङ्गेषु मुद्रितेषु सुग्धबोधपुस्तकेषु शसि क्रोष्टून् आमि च क्रोष्टूनामित्येकैकमेव पद दृश्यते । तर्कवागीशमते तु शसि क्रोष्टृन् क्रोष्टून् आमि च क्रोष्टृणाम क्रोष्टूनामित्येवाचार्य्यसम्मतमिति प्रतीयते । तदस्माभिरपि तथैव सन्निवेशितम । दुर्गादासोऽपि शसि क्रोष्टृन् क्रोष्टून् इति पदद्वयमाचार्य्य सम्मतमित्याह ।

(२) न तु घि क्लीवे इत्यनेन विशेषविहितस्येत्यर्थ ।

(३) यस्मिन् विधौ कृते ऽकृतेऽपि वा, यस्माद्विधे परं पूर्व्वस्येत्यर्थ, प्रसक्तिर्विद्यते यस्य तादृक यो विधि स एव नित्य, स एव विधि पूर्व्वोक्तविधे

१४३ । णुर्ङिघ्योः । (णुः ११, ङिघ्योः ७।१) ।

ऋकारस्य णुः स्यात् ङौ घौ च परे । क्रोष्टरि क्रोष्टरोः ।

पक्षे हसे च शम्भुवत् ।

हूहूः हूह्वौ हूह्वः इत्यादि, वातप्रमीवत् । एवमतिचम्वादयः ।
सुभ्रूः सुभ्रुवौ सुभ्रुवः इत्यादि सुधीवत् । एवं कटप्रू-स्वयम्भ्वादयः ।
सुलूः सुल्वौ सुल्वः इत्यादि प्रधीवत् । एवं हूनभू-खलप्वादयः ।
धाता, त्वनन्तक्रोष्टुवत् । घौ हे धातः । एवं नप्तृ-होतृ पोत्रादयः ।
पिता, हे पितः ।

पिता माता ननान्दा ना सव्येष्ठ-भ्रातृ यातरः ।
जामाता दुहिता देवा न त्वनन्ता इमे दश ॥

---

१४३ । णुः । ङिश्च घिश्च तौ तयोः । व्युत्क्रमनिर्देशात् (१) ऋतः सेस्त्वेऽपि णंग्राहकत्व, तेन हे पठितगमल् इत्यादौ घौ ऌतोऽपि णुः । अनुकरणात् (२) सिद्धमित्यन्यः । एव जसि पठितगमलः इति । पक्षे हसे च इति—स्यमौजस्भिन्नेऽचि हसे चेत्यर्थः । वातप्रमीवदिति अमि हूहूं शसि हूहून्, ङौतु वातप्रमीशब्दस्य वातप्रमी, हूहूशब्दस्य हूह्वि इति शेषः । अतिचमूशब्दस्य शसि

---

प्रागभवतीत्यर्थः । इति न्यायात् प्रवृत्ते शसो नकार आमो नुम च तनः स्थाने तथि हृते चक्षत च भवितु मर्हति । अतस्तावेव त्वणादेशात् पूर्व्वं स्यातामिति । एतेन शसि क्रोष्टून् आमि च क्रोष्टूनामित्येव न तु क्रोष्टॄन् क्रोष्टॄणामिति केषाञ्चिन्मतम् ।

(१) घिङ्योरित्यनुक्तेति शेष· ।

(२) ऋकार-ऌकारयो समत्वादित्यर्थ· ।

१४४। घावस्वसृत्वणः। (घौ ७, अ-स्वसृत्वणः ६।)।

घौ परे ऋकारस्य णः स्यात् नतु स्वसृत्वणः। पितरौ पितरः, पितरं पितरौ। शेषं धातृवत्। एवं जामातृ-भ्रात्रादयः।

१४५। नुर्वा नामि घंः।

(नुः ६।, वा।१।, नामि ७, घंः १।)।

नृशब्दस्य नामि परतो घंः स्यात् वा। नृणां नृणाम्। शेषं पितृवत्।

---

अतिचमूरिति अवयवस्त्रीत्वादिति भाष्यम् (१)। सुभुवाविति दृम्भ्वादिभूभिन्नत्वादुव्। तृनन्त क्रोष्टुवदिति—ये तु शसामि तृन् नेच्छन्ति तन्मते शसामभिन्ने इति शेषः। धौ हे धातरिति गुदर्शनार्थमुक्तम्। पित्रित्यादि—इमे दश तृनन्ता अपि न तृनन्ता इत्यर्थः। एतदन्ये अतृनन्ता अपि तृनन्ता इत्यर्थः, तेन नीधो रौणादिक-तृत्वे सन्, नेष्टा नेष्टारौ नेष्टारः इत्यादौ न णः।

१४४। घाव। स्वसा च तृंश्च तत्, न तत्, अस्वसृतृन् तस्य। स्वसृशब्दस्य तृनन्तत्वातिदेशात् णनिषेधे सिद्धे स्वसृग्रहणं, क्वचिदतिदेशकार्य्यमनित्यमित्यस्य ज्ञापनार्थम्। तेन शंस्तरौ शंस्तरः शास्तरौ शास्तरः इत्यादौ णः। कल्जटस्तु शंस्तारौ शंस्तार इत्याह।

१४५। नुर्व्वा। अयं नियमो गोणेऽपि, तेनातिनृणां अतिनृणामिति।

---

(१) समते अतिचमूर्निति।

१४६। ओरौ घौ।

(ओः ६।, औ ।१।, घौ ७।)।

ओकारस्य औकारः स्यात् घौ परे। गौः गावौ गावः।

१४७। आम्शसोः।

(आ ।१।, अम्-शसोः ७॥)।

ओकारस्य आकारः स्यात् अमि शसि च परे। गां गावौ गाः, गवा गोभ्यां इत्यादि। (१२५) ङस्येङो लोप इति, गोः गोः।

---

१४६। ओरौ। ओरित्यत्र सामान्यशब्दस्य विशेषपरत्वात् डिदोत्यान्तस्यैव ग्रहणम्। तेन स्मृत उर्येन स्मृतोः मह्नोः हे चित्रगो इत्यादौ न स्यात्। गौः द्यौ रित्यादौ स्यात्। लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् इति न्यायात् हे गौः हे द्यौः इत्यादौ एङो न धिलोपः (१)।

१४७। आम्। अम्च शस्च तयोः। ओरित्यत्र सामान्यस्यैव ग्रहणात् गां द्यां, उना सह वर्त्तते सोः तं सां, स्मृतां मह्नामित्यादि स्यात्। कश्चित् पूर्व्वत्रापि सामान्यस्य ग्रहणात् स्मृतौः मह्नौः चौरित्याह (२)।

---

(१) १०८ सूत्रस्य टीका द्रष्टव्या।

(२) सह उना वर्त्तते सो तस्मात् सो इत्ये सौरिति।

१४८। रै रा सुभि। (रै ।१।, रा ।१।, सुभि ७।)।

रै शब्दो रा स्यात् से मे च परे। राः रायौ रायः, राभ्यामित्यादि।

ग्लौः ग्लावौ ग्लावः इत्यादि।

इति अजन्त पुंलिङ्ग-पादः।

---

## अजन्तस्त्रीलिङ्ग-शब्दः।

१४९। आवीप्‌हसात् से लोपः।

(आप् ईप्-हसात् ५।, सेः ६।, लोपः १।)।

आप ईपो हसाच परस्य से र्लोपः स्यात्। उमा।

---

१४८। रै। सु च भ च तत्तस्मिन्। गौणेऽपि सुराभ्यां कुलाभ्यामिति स्यात्। नानामोरपि (१) रादेश इत्यन्ये, तन्मते सुराणा कुलेन सुराणां कुलानामिति। अस्मन्मते तु सुरिणा सुराया सुरीणां सुरायामिति।

इत्यजन्तपुंलिङ्गपादः।

---

१४९। आवी। आप् च ईप् च हसश्च तत्तस्मात्। आविति अनेन डापोर्ग्रहणं, पिद्‌ग्रहणात्। उमेति यव रघादौ मस्यः कित् उडा सह छट् बाहुल्यात् स्वः स्त्रियामत आप्। कश्चिदु-मागब्दोऽभिधायकत्वेनास्या अस्ति, यशैवादित्वादः पयादाप्। तथाच

---

(१) टाविभक्तौ आमिचेत्यर्थः।

१५०। यौरापः। (इ।१।, औः १।, आपः ५।)।

आपः पर औरौ स्यात्। उमे उमाः।

---

उमेति माता तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कुमारसम्भवे इत्याह (१)। ननु स्यात्स्याराणुप् फे इति सिलोपे वागित्यादि सिध्यति किमर्थं हसोग्रहणं, न च गोः धूरित्यादौ न सेर्लोपः अरादिति निषेधादिति वाच्यं, तर्हि आबीन्नात् सेर्लोप इति सूत्रं क्रियतामिति चेन्न, एवं श्वेतवाः अवया इत्यादौ लुपि अयुक्त डसङ्विधेः (२) प्राप्त्यर्थं हसोग्रहणं, लोपः स्वरादेशयोः स्वरादेशो विधिर्बलवान् इत्यस्य ज्ञापनार्थञ्च। एवं सति राजा वेधा इत्यादावपि घः (३)।

१५०। यौरापः। घंकरणात् जरसी इति।

---

(१) उमेति। संज्ञाशब्दानां यथाकथञ्चित् व्युत्पत्तिः कार्य्येति प्राञ्चः। उः शिवः तं मिमीते जानातीति माङ् मि शब्दे इत्यन्यत्राप्यादेरिति ड प्रत्यये उम इति शब्दात् स्त्रियामापि उमेति रूपम्। उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कालिदासस्य कवितैवेति दुर्गादासः। (नतु उमाशब्दस्य वस्तुतो व्युत्पत्त्याधायकं तदिदमेवकारार्थः)।

(२) अयुक्त डसङ्विधेरिति—अयुक्तस्य लुपि सति प्राप्तस्य आदिविधेर्निषेधात् प्राप्तस्य डसङ्विधेरित्यर्थः। डसङ्विधेरित्यस्योपलक्षणत्वात् भिट् भुगित्यादौ टघादीनाञ्च ग्रहणमिति।

(३) एवं सति—स्वरादेशस्य स्थानवत्त्वे हसोग्रहणे च सतीत्यर्थः। स्वरादेशस्य स्थानवत्त्वात् राजेत्यत्र आदौ दीर्घे पश्चाल्लोपः। हसो ग्रहणं विना वेधा इत्यत्र सकारद्वय संयोगे आदेः सोलोप इत्यादेर्स्थानवत्त्वादादौ सलोपे वेध इत्यनिष्टं स्यात्। स्वसमोऽधोरित्यत्र असन्ताङ्गस्यैव दीर्घविधानात्।

१५१। धिटौसेः। (धि-टा-ओसि ७।, एः १।)।

आप एः स्यात् धौ टौसोय परतः। हे उमे।

उमां उमे उमाः, उमया उमाभ्यां उमाभिः।

१५२। ङितां यम्। (ङितां ६।।।, यम् ।१।)।

आपः परेषां ङितां यम् स्यात्, म इत्। उमायै उमाभ्यां उमाभ्यः, उमायाः उमाभ्यां उमाभ्यः, उमायाः उमयोः उमानाम्।

(१३८) न्याप्दीभ्योङेरामिति। उमायां, उमयोः उमासु। एवं दुर्गामायाम्बिकादयः।

१५३। स्रेः स्यम् स्रश्च।

( स्रेः ५।, स्यम् ।१।, स्रः १।, च ।१।)।

स्रेरावन्तात् परेषां ङितां स्यम् स्यात्, पूर्व्वस्य च स्रः।

---

१५१। धिटौ। धिश्च टाश्च ओश्च तत्तस्मिन्। अर्थात् तिं विपरिणम्याह आप इति। सिलोपमाश्रित्य (१) एः।

१५२। ङितां। ङ इद्येषां ते तेषाम्। यमो म इत्, अदन्त आगम. (२)। उमायामिति आप् ग्रहणात् पादौ ङेराम् पश्चाद् यम्। सर्व्वस्यामित्यत्र स्यमागमत्वान्न यम्।

१५३। स्रेः। ङितामापश्चेत्यनुवर्त्तते। स्यम्स्रावित्य-

---

(१) त्यलोपे त्यलक्षणमित्युक्तेः।

(२) ङिति य इत्यनेनैवेष्टसिद्धौ ङितां यम विधानं, यकारस्य विभक्तिभाजित्वात् टाभिस् इत्यादिना ङेस्भ्यतोनामयादादेशनिवृत्त्यर्थमिति दुर्गादासः।

सर्व्वस्यै सर्व्वस्याः सर्व्वस्याः सर्व्वस्याम्। आमि सर्व्वासाम्। शेषं उमावत्। एवं विश्वादय आवन्ताः।

अपुरीत्युक्तेः—अन्तरायै नगर्य्यै।

द्वितीयस्यै द्वितीयायै, द्वितीयस्याः द्वितीयायाः, द्वितीयस्यां द्वितीयायाम्। शेषमुमावत्। एवं तृतीया।

## १५४। सुभ्रूदीह्रस्वार्थानां धौ स्वः।

(सुभ्रूदीह्रस्वार्थानां ६।।, धौ ७।, स्वः १।)।

सुभ्रुवो दा ह्रस्वार्थानाञ्च स्वः स्यात् धौ परे। हे अम्ब। शेषमुमावत्। एवमक्काल्लादयः। ह्रस्वः किं—हे अम्बाले, हे अम्बिके।

---

करणात् पूर्व्वस्यैव स्वो न तु ङिताम्। ङस्यम् इति न क्वतम् अस्यै अस्या इत्यादिसिद्ध्यर्थम् (१)।

१५४। सुभ्रू। ह्रावचौ येषां ते, अम्बा अर्थो येषां ते, ह्रश्च ते अम्बार्थाश्चेति ते, सुभ्रूश्च दीच ह्रस्वार्थाश्च ते तेषाम्। विमानना सुभ्रु कुतः पितुर्गृहे। हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स इत्यादि प्रयोगदर्शनात् सुभ्रूग्रहणम्, दीसंज्ञामाह-चर्य्यात् स्त्रियामेव। तेन हे सुभ्रूः पुरुष इत्यत्र न स्यात्। तथाच गिरीश सुभ्रूस्तव पादपद्मं भजन्ति मुक्त्यै कवयोऽसुरारे इति। अक्काल्लादय इति, आदिना हे अत्त हे अम्म इत्यादि। पादद्मेति। पतनागम्दं परे माडुः।

---

(१) ननु ङस्यमात् इनिह्री भवेति वर्णनात् चेत्, अह्ने इत्यादिनाधने ह्रकारपरत्वाभावे नाम ङस्यमाप्तसौरिति दुर्गादासः।

जरा। (११६) जरस् जराचि ॥। जरसौ। केचिटादावीत्व-मिच्छन्ति। जरसी जरे। जरसः जराः इत्यादि। पाददन्तेति, नासिका-पृतना-निशानां नस्-पृत्-निशः। नसः नसा नोभ्या-मित्यादि। पृतः पृता पृद्भ्यामित्यादि। निशः निशा।

१५५। शच्छ्राज भ्राज यज व्रज सृज मृज व्रश्च भ्रस्जां षड् भौ।

(श—भ्रस्जां ६।॥, षड् ।१।, भौ ७।)।

शान्तानां छान्तानां राजादेश्च षड् स्यात् भौ परे।

१५६। षो डः फे। (षः ६।, डः १।, फे ७।)।

षस्य डः स्यात् फे परे। विड्भ्यां इत्यादि। षचे घौ च उभावत्।

गोपा, विश्वपावत्।

मति ईरिवत्, स्त्रीत्वात् न शस् न, न टा ना। मतीः मत्या।

---

१५५। शछ्रा। श च छ च राजश्च भ्राजश्च यजश्च व्रजश्च सृजश्च मृजश्च व्रश्चश्च भ्रस्जश्च ते तेषाम्। षडो डित्त्वादन्त्यस्य। रक्षितस्तु राजादिसाहचर्य्यात् धात्ववयवस्यैव शस्य षड्, तेन निज्भ्याम् निच्छु निक्षु इत्याह (१)। इह सामान्य-शग्रह-णात् गिरिविश्मानमाचष्टाणः गिरिविट्, एवमश्मानमाचष्टाणः अडित्यादि।

१५६। षो। इह सामान्यषग्रहणात् षट्, उष्माणमाच-क्षाण उडित्यादि।

---

(१) तन्मते निशाशब्दात् भ्यामि सुपि च रूपाणि।

१५७। द्या ङितामम्।

(द्याः ५।, ङितां ६।।, अम् ।१।)।

द्याः परेषां ङितामम् स्यात्, म इत्। मत्यै मतये, मत्याः मतेः, मत्यां मतौ। एवं श्रुति-स्मृति-बुद्ध्यादयः।

१५८। स्त्रियां त्रिचतुरो स्तिसृचतसृ ऋवत् सौ।

( स्त्रियां ७।, त्रिचतुरोः ६।।, तिसृ-चतसृ ।१।, ऋवत् ।१।, सौ ७।)।

त्रिचतुरोः स्त्रीलिङ्गे क्रमात् तिसृचतसृौ स्तः सौ परे। तौ च ऋवत्, तेन न णुत्रिर्वा:। तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः तिसृणां तिसृषु।

टेरत्वे सत्याप्। द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः।

गौरी गौर्यौ गौर्यः, हे गौरि, गौरीं गौर्यौ गौरीः, गौर्या गौरीभ्यां गौरीभिः (१५७) द्याङितामम्। गौर्यै गौरीभ्यां गौरीभ्यः, गौर्याः गौरीभ्यां गौरीभ्यः, गौर्याः गौर्योः गौरीणां, गौर्यां गौर्योः गौरीषु। एवं वाणी-काली नद्यादयः।

---

१५७। द्याः। ङ इद्येषां ते तेषाम्। मत्यै इत्यादौ लाचणिकत्वान्न णः। द्या ङित्य इति न कृतं, आगमो यद्गुणस्तद्ग्रहणेन गृह्यते इत्यस्यानित्यत्वज्ञापनार्थम्, तेन पट्स् सन्त इत्यादौ- ष्टुभिरित्यादिना न स्तोः ष्टुत्वम्।

१५८। स्त्रियाम्। त्रि च चतुर च तौ तयोः, त्रिचतुरो- रित्यनुकरणात्। त्रिचतुरोर्यदा स्त्रियां वृत्तिस्तदेयादेशस्तेन

लक्ष्मीः। अनीबन्तत्वात् न सिलोपः। शेषं गौरीवत्। एवम् अवी-तन्त्र्यादयः।

स्त्री, हे स्त्रि।

---

प्रियास्तिस्रो यस्य स प्रियतिसा, प्रियाश्चतस्रो यस्य स प्रियचतसा इत्यादौ स्यात्। नतु प्रिया त्रयो यस्याः सा प्रियत्रिः, प्रियाश्चत्वारो यस्याः सा प्रियचत्वारित्यादौ। स्त्राविति प्रकरणात् प्राप्ते स्त्रिग्रहणात् प्रियतिस्र प्रियचतस्र कुलमित्यत्र लोलुकि स्यादेव, न तु तिस्र इच्छति त्रिकाम्यति, चतस्र इच्छति चतुर्य्यति, तिसृणां प्रियः त्रिप्रियः, चतसृणां प्रियः चतुःप्रिय इत्यादौ। केचित्तु प्रियत्रि प्रियचतुः कुलमित्याहुः। कश्चिदाह साक्षात् स्त्रावेव विधानार्थं स्त्रिग्रहणमिति। न णुत्रिघौ इति—उक्ता णुत्रिघौ इति न स्युः, तेन प्रियतिसृणि कुलानि प्रियचतसृणि कुलानि, परत्वात् घं:(१)। अत्वासकरणात् (२) प्रियतिस्रः आगतः प्रियतिस्रो धनमित्यादौ न डुः। अमी इति किं—प्रियतिसा प्रिय चतसा (३)। तिसृणां

---

(१) उक्ता णुत्रिघौ इत्युक्ते· नसम्महच्च इति वक्ष्यमाणसूत्रेण दीर्घत्वं न निषिध्यते इत्यर्थः।

(२) अत्र—नणुत्रिघौइत्यत्र, असकरणात्—यत्र अकारेण सह स समासस्तत् करणात्, अशब्दे नात्र अकारकार्य्यं लक्ष्यते। तथाच णुत्र त्रिघ घंश्च अश्च ते णुत्रिघौ इत्येवं समास करणात् अकारस्थानजातकार्य्यमपि न स्यात्। तेन डसिङसो रकारस्य न डुरिति।

(३) अमी-णुत्रिघौ इति। एतेषां निषेधादेतदन्यत कार्य्यं भवतीति ज्ञापितम्। एतञ्च दुर्गादासेन "आतिदेशिकमनित्यमिति न्यायात् सौ ■ न्हत्रदिति बोध्यम्, तेन सख्यृद्भ्रामिति से डौ' इति।

चतसृणामित्यत्र आगमादेशयोरागमो विधिर्बलवान् इति न्यायात् नुमि तिसृचतस्रादेशे ऋवर्णाभावात् ण: (४) ।

लक्ष्मीरिति लक्षधोरी: ईकारस्य सुम् च। अवीतन्त्र्यादय इति—आदिना तरी श्री-ह्री संग्रहः । यदुक्तं—

अवी-तन्त्री-तरी-लक्ष्मी-श्री-ह्री भ्रूणामुणादित: ।

स्त्रीलिङ्गवर्त्तिनामेषा सेर्लोपो न कदाचन ॥

( अनीवन्ततया लोपो न गौणे न च ह्रस्वता )।

---

(४) अत्र सूत्रे कार्त्तिकेयसिद्धान्ते—प्रियतिसा—अत्र कथं "ङस्याया ङो यह्वोरिति सूत्रेण ङसाद्ययो न स्यात्, तत्र सामान्यशब्दस्य विशेषपरत्वात् उदाहरणज्ञापकाच्च ङस्याक्याभ्यां परात् ङस्याशब्दकथनात् परविधानात् अत्र तदभावासम्भवः । अत्र पञ्चमत्ता ऋवत् इत्युक्ता न णुम्रिर्वा इति विशेषकथनात् गुणाद्यतिरिक्तस्थले एतयोर्दीर्घद्वयस्य नास्तीति ज्ञापितम्। तेन सौ प्रियतिसा इत्यत्र ऋच्युङ्ग्नामित्यनेन डेर्डौ प्रियतिसृणामित्यत्र सुखानुम्। नन्वेवञ्चेत् यदि प्रियतिसृ इत्यत्र गुणाद्यतिरिक्तकार्य्यस्य सदीर्घामित्यनेन यसोऽकारलोपस्य सम्भवोऽस्तु चेत्। तेन न णुम्रिर्वा इत्यत्र षष्ठ्याने अकारो वर्त्तते। तेन अकारकार्य्यमपि न स्यात्। * * * * अतएव ङसिङसो प्रियतिसृ इत्यत्र ऋतो ङोर्डुरित्यनेन अकारकार्य्यं डुर्न स्यादिति साधु सङ्गच्छते। एवमत्र कालापिकास्तु 'तौ र स्वरे" (तौ तिसृ चतसृ विभक्तिस्वरे परे रं रेफं प्राप्नुत । कातन्त्रे चतुष्टयसूत्रे १६८) इति सूत्रं सर्व्वापवादकं मत्वा यसो नकाराभावं चक्रुः । वयं तन्मतेनवाद्यतया अव्ययवस्त्रीलिङ्गत्वात् तस्य तदभावमकार्ष्म । अत्र स्त्रियामेव निषिद्धं, तत्र डेर्डौ इति विशेषात्। तत्राङ्घ्यर्थान् णुरिति अत्रैव निषिद्धं । तेन सम्बोधने हे प्रियतिस रित्यत्र णुरेव। यद्यपि पिता मातेत्यत्र न्त्र देह ननन्दृ यामन्ननात्स्वेऽपि निषेधात् तद्भिन्न ऋदन्तानां तृन्नन्तातिदेशेन एतयोस्तृन्नन्तसम्भवात् धावस्वष्टत्य इत्यत्र तृन्नन्तवर्ज्जनात् एतदोर्गुणसम्भावना नास्ति, तथापि न णुम्रिर्वा इत्यनेन गुण निषेधकरण णुर्ङिभ्योरित्यनेन गुणनिषेधार्थम्। तेन ङौ प्रियतिसि न तु प्रियतिसरीति। अथैवं प्रियास्तिस्रो यस्य कुले इति वाक्ये प्रत्ययमात्रदायिक कार्य्यात् प्रकृतिमात्रदायिककार्य्यस्य बलवत्त्वात् आदौ सर्व्वावयवादेशे ततो

१५९। स्त्री भूर्धुः। (स्त्री ।१।, भूः १।, धुः १।)।

स्त्रीशब्दो भूशब्दश्च धुसंज्ञः स्यात्।

(१२६) धोरियुवचि। स्त्रियौ स्त्रियः।

१६०। स्त्री वामशसोः।

(स्त्री ।१।, वा ।१।, अम्-शसोः ७॥)।

स्त्री-शब्दो धुसंज्ञो वा स्यात् अमि शसि च परे।

स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः, स्त्रिया स्त्रीभ्यां स्त्रीभिः, स्त्रियै स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रियोः स्त्रीणां, स्त्रियां स्त्रियोः स्त्रीषु।

---

१५९। स्त्रीभूः। स्त्री च भूश्च तत्, पुंस्त्वं सौत्रत्वात्, भिन्नं वा। इयुवविधानार्थमिदम्।

१६०। स्त्री वा। अम् च शस् च तौ तयोः। पुनस्त्री-ग्रहणं भूनिवृत्त्यर्थम्। स्त्रियं स्त्रियः इत्यत्र आदावियादेशः नत्वमृशसादेर्लोपः, धुत्वातिदेशविधानात्। स्त्रियै इत्यादि—नास्त्रीयुव इत्यत्र स्त्रीवर्ज्जनादादौ दीकार्य्यं पश्चादियादेशः। एवं स्त्रीणामित्यादौ नुमि अजभावादेयादेशः। गौणे अति-

---

विभक्तिकार्य्यं नुमादि। तेन प्रियतिसृ प्रियतिसृणी प्रियतिसृणि इत्यादि। * * * * कातन्त्रे तु स्यमोर्लुकि तिसृचतसोर्विकल्पसंज्ञा प्रियतिसृ प्रियत्रि प्रियचतसृ प्रियचतुरित्युदाहृतम्। * * * * एवञ्चेत् प्रियतिसा प्रियचतसा इत्यादौ षट्त्वात् कथमेष न स्यात् इति चेत् सत्यम्। पूर्व्वावस्थायां षट्त्वाभावात् इति केचिदाहुः। तदयुक्तम्। यत क्रोष्टुशब्दस्य पूर्व्वावस्थायाम् षट्त्वाभावात् स्वयमपि क्रोष्ट्रीत्युदाहृतमेव। वस्तुतस्तु न अनर्थकत्वेनेन संज्ञा-बाधकादोषो निषेधादित्यपेक्षम्।

श्रीः श्रियौ श्रियः, हे श्रीः, ङित्यामि च भेदः—श्रियै श्रिये, श्रियाः श्रियः, श्रियाः श्रियः, श्रीणां श्रियां, श्रियां श्रियि, श्रीषु।

सुध्यादयः पुंवत्। सुष्ठु धीः, प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवत्।

धेनु र्मतिवत् साध्यः। धेनुः धेनू धेनवः इत्यादि।

वधू र्गौरीवत्। वधूः वध्वौ वध्वः इत्यादि। एवं चमू-तन्वादयः।

भ्रूः श्रीवत्। भ्रूः भ्रुवौ भ्रुवः इत्यादि। सुभ्रूः हे सुभ्रु।

पुनर्भूः सुलूवत्। सुभूः पुंवत्।

स्वसा धातृवत्। माता पितृवत्।

द्यौ र्गोवत्। सुराः पुंवत्। नौः ग्लौवत्।

इति भजन्त स्त्रीलिङ्गपादः।

---

स्त्रियां वधुस्त्रियामित्यत्र न नुम् दीसंज्ञाभावात्। श्रीशब्दस्य ङिति आमि च पाक्षिकदीसंज्ञाफलमाह—ङित्यामि च भेद इति। सुध्यादयः पुंवदिति-शोभना धीर्यस्याः सा सुधीरित्यस्या-नित्यस्त्रीत्वान्न दीसंज्ञा, एवं प्रकृष्टा धीर्यस्याः सा प्रधीरिति। शोभना चासौ धीश्चेति सुधीः, प्रकृष्टा चासौ धीश्चेति प्रधीरित्यत्र ये से नित्यस्त्रीत्वात् दीसंज्ञा स्यादेव। एवं स्याद्युत्पत्तेः प्राक् सेऽपि दीसंज्ञेति विशेषः। शोभनं दधाति, क्विप्, सुधीः। चमू-तन्वादय इति—ऊवन्तपक्षे तनूशब्दस्य ग्रहणं, चनूयन्तमु धेनुशब्द-वत्। सुलूवदिति—क्यादीत्यनेन यथा सुलूकारस्य वादेश-

१६१। क्लीवात् स्यमो ऽधेर्मोऽतः।

( क्लीवात् ५।, सि अमः ६।, अधेः ६।, मः १।, अतः ५। )।

अकारान्तात् नपुंसकात् परस्याधेः सेरमश्च मः स्यात्। ज्ञानं हे ज्ञान।

---

स्तथास्यापि। किन्त्वस्य नित्यस्त्रीत्वात् दीसंज्ञायां पुनर्भू पुनर्भूः पुनर्भ्वै पुनर्भ्वाः पुनर्भ्वाः पुनर्भूणां पुनर्भ्वामिति विशेषः। एवं वर्षाभू-काराभू दृन्भूनामपि। एषां नित्यस्त्रीत्वन्तु—

पुनर्नवायां वर्षाभूः स्त्रियां किञ्जुलके प्लवे।

पुनर्भूः स्याद्विरूढ़ायां दृन्भूः पन्नगवज्रयोः।

काराभूर्निगड़स्थाने क्रियायामपि चेष्यते॥ इति कोषात्।

वर्षाभूशब्दस्य शोणादिपाठाद्दीपि वर्षाभ्वीत्यपि परे। तथाच भागुरिः—भार्य्या भेकस्य वर्षाभ्वी भृङ्गी तु मधुरस्य चेति। वर्षाभ्वी कमठी दुलीत्यमरः। सुभूः पुंवदिति—उवः स्थानिवत्त्वेन दीसंज्ञाभावात्। धातुवदिति—अस्य स्त्रीत्वात् शसि स्वभूरिति विशेषः। सुराः पुंवदिति—शोभनो रा यस्याः सा इति वाक्यम्।

इत्यजन्त स्त्रीलिङ्गपादः।

---

१६१। क्लीवात्। सिश्च अम् च तत्तस्य, न धिरधि स्तस्य। ज्ञानमिति मविज्ञानसामर्थ्यात् अतः स्यमोर्न लुक्। न च स्यमोरमि कृते जरातोऽमीति विनैवाजरसमिति सिध्यतीति वाच्यं, जरसादेशे अनदन्तत्वात् स्यमोर्लुक्प्रसक्तेः।

१६२ । क्लीवाद् यौः ।

( क्लीवात् ५।, ई ।१।, औः १। ) ।

क्लीवात् पर औरी स्यात् । ज्ञाने ।

१६३ । जस्‌शसोः शिः ।

( जस्‌शसोः ६॥, शिः १। ) ।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत् ।

१६४ । नुणयमादौ झसन्तरलादौ तु वा ।

(नुण् ।१।, अयमादौ ७।, झसन्तरलादौ ७।, तु ।१।, वा ।१।) ।

क्लीवस्य शौ परे नुण् स्यात्, न तु यमादौ, झसन्तरलयोरादौ तु वा स्यात् ।

---

१६२ । क्लीवाद्यौः । ई इति लुप्तप्रथमैकं दम् । पुनः क्लीवग्रहणात् अनतोऽपि औरीस्तेन वारिणी पयसी इत्यादि ।

१६३ । जस् । शित् करणं शिः क्लीबे इति विशेषणार्थम् ।

१६४ । नुण् । यमस्यादिः यमादिर्न यमादिरयमादिस्तस्मिन् । झस् अन्ते ययोस्तौ, रश्च लश्च तौ, झसन्तौ च तौ रलौ चेति तौ, तयोरादिः झसन्तरलादिस्तस्मिन् । शिं विपरिणम्य क्लीव शौ इत्यनुवर्त्तयत्याह क्लीवस्य शौ परे इति । अयमादौ किं--बहवो यो येषु तानि बहुयि पयानि बहुयमानि इत्यादि । झसन्तरलादौ तु ऊर्न्ज्जि ऊर्ज्जि सुवल्गि सुवल्गि इत्यग्रे वक्ष्यति ।

## १६५। नसव्महन्नोऽधो घोंऽधौ घौ।

(नस् अप्-महत् नः ६।, अधोः ६।, घं: १।, अधौ ७।, घौ ७।)।

नसन्तस्यापो महतो नान्तस्य च धुवर्जस्य घं: स्यात् अधौ घौ परे। ज्ञानानि। द्वौ श्रीवत्। शेषं रामवत्। एवं वन-धन-फलादयः।

## १६६। तोऽन्यादेर्मोऽनेकतरात्।

( तः १।, अन्यादेः ५।, मः ६।, अनेकतरात् ५। )।

अन्यादेः परस्य स्मो र्मस्य तः स्यात्, न त्वेकतरात् परस्य। अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। एव-मन्यतरादयः। अनेकतरात् किम्—एकतरम्।

---

१६५। नस। नस् च आपश्च महांश्च न च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। धिवर्ज्जनादक्लीबेऽपि राजा सीमा इत्यादौ घं:। गौणेऽपि अयं विधिस्तेन सुविद्वांसि सुराजानि कुलानि इत्यादि।

१६६। तो। अन्य आदिर्यस्य स तस्मात्, न एकतरम् अनेकतरं तस्मात्। मण्डूकगत्या स्मोरित्यनुवर्त्तयन्नाह स्मो-रिति। अन्यादेः किं—अन्यतमम्। अन्यतमदिति भाष्यम्(१)। हे अन्यदिति कश्चित्।

---

(१) सिद्धान्तकौमुद्यान्तु ७।१।२५।१०२। इति सूत्रे अन्यतम शब्दस्य त्वन्यतमदित्येवेति वृत्तिः।

१६७। जरातोऽम् वा।

( जरातः ५।, अम् ।१।, वा ।१। )।

जरा शब्दात् परस्य स्वमोर्मस्य अम् स्यात् वा। अजरसम् अजरम् अजरसौ अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत्।

(११७) पाददन्तेति शीर्षहृदयोदकासनानां शीर्षन् हृदुदनासनः। शीर्षाणि शीर्ष्णा शीर्षभ्यामित्यादि। हृन्दि हृदा हृद्भ्यामित्यादि। उदानि उद्ना उदभ्यामित्यादि। आसानि आस्ना आसभ्यामित्यादि। पक्षे शेषे च ज्ञानवत्।

१६८। क्लीवे स्वः। ( क्लीवे ७।, स्वः १। )।

क्लीवे घंस्य स्वः स्यात्। श्रीपं, ज्ञानवत्।

---

१६७। जरा। म इत् अकारागमः। जरसादेशनिमित्तकाऽमो नित्यत्वाज्जरसादेशस्य नित्यत्वसन्देहनिरासार्थं वाग्रहणमिति कश्चित्। (१)

१६८। क्लीवे। स्वशब्दस्य सापेक्षत्वात् घंस्येति लभ्यते इत्याह क्लीवे घंस्येति। क्लीवे इति निर्देशात् येन विधिस्तदन्तस्येति न्यायात् अन्त्यस्यैव घंस्य स्वः, तेन श्रीपमित्यत्र श्रीकारस्य न स्वः, एवं सह एन वर्त्तमानं सं इत्यादि। प्रकरणात्क्लीबेरेव, तेन ग्रामे अपु-

---

(१) वाग्रहणं सन्निपातपरिभाषयोर्मुख्यस्य अकारनिमित्तस्यानित्यत्वज्ञापनार्थं, तेन मर्षैरानिमिषारौ चेतुस्विरित्यन्ये। अतएव जरसादेशाभावपक्षे अजरमित्यत्र अमादिलोप इत्यधिकः पाठः।

१६९ । **स्वमो र्लुक्** । ( सि-अमोः ६॥, लुक् ।१। ) ।

क्लीवात् परयोः स्वमोर्लुक् स्यात् । वारि ।

१७० । **नुमिको ऽच्यनामि** ।

( नुण् ।१।, इकः ६।, अचि ७, अनामि ७ ) ।

इगन्तस्य क्लीवस्य नुण् स्यात् अचि परे, नत्वामि । वारिणी वारीणि ।

---

णी इत्यादौ न स्वः । वनाभ्यां वनेभ्यः इत्यादौ असिद्धं बहिरङ्ग-मन्तरङ्गे इति न्यायात् असिद्धः स्वो न स्यात् (१) ।

१६९ । स्वमोर्लुक् । सिश्च अम् च तौ तयोः । क्लिं विपरिणम्याह क्लीवादिति ।

१७० । नुमिकः । इक् प्रत्याहारः, न आम् अनाम् तस्मिन् । नञ् युक्तवद्न्यायात्, स्याद्यचेव (२) तेन वारीदम् इत्यादौ न स्यात् । वारिणी इति णिस्वादन्ते, आदौ नुण् पयात् ई । वारीणीति जसः घिस्तस्मिन् नुसयमादाविति नुण् नसघ्महन्त इति र्घः (३) ।

---

(१) अन्तरङ्गे प्रकृतिघटितकार्य्यस्थले बहिरङ्ग प्रत्ययघटितकार्य्यम् असिद्धम् अग्राह्यं भवतीत्यर्थः । अत्र क्लीवलिङ्गशब्दस्य योऽन्त्यदीर्घस्तस्य ह्रस्वविधानात् प्रत्ययघटितदीर्घस्य ह्रस्वत्वं न स्यात् तेन वनाभ्याम इत्यादौ न ह्रस्व । अतएव सुपिप्रकारे सुबन्तपादे "नामहते रिति ९८ सूत्रस्य टीकाया प्रकृतेरन्त्योऽप्रति प्रत्ययादि । प्रत्ययादे अन्त्यत्वे सति क्लीवे प्राप्तो ह्रस्वो न भवतीति गोयीचन्द्र ।

(२) यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृगजातीयस्येति न्यायादित्यर्थः ।

(३) अनामीति किं वारीणामित्यादौ अन्तरङ्गत्वादादौ नुणि कृते नुसपरत्वा भावाद्नुमाममभावे दधिद्नामित्यादिवद्दीर्घो न स्यादिति दुर्गादास ।

१७१ । णुर्धौ वा । ( णुः १।, धौ ७।, वा ।१। ) ।

इगन्तस्य क्लीवस्य णुर्व्वा स्यात् धौ परे । हे वारे हे वारि । वारिणी वारीणि वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां वारिणि वारिणोः । इसे हरिवत् ।

१७२ । पुंवद्वार्थोक्तपुंस्कं टाद्यचि ।

( पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७। ) ।

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवत् वा स्यात् टाद्यचि । अनादये अनादिने इत्यादि । शेषं वारिवत् । अर्थेन किं पीलुने फलाय ।

---

१७१ । णुर्धौ । विधानसामर्थ्यात् लुकि वा णुः । हे सुधे हे सुधि, हे सुनो हे सुनु, हे सुधातः हे सुधातृ, हे लिखितगमल् हे लिखितगमल्ल इत्यादि ।

१७२ । पुंवत् । पुमानिव पुंवत् । अर्थेन तुल्यप्रवृत्तिनिमित्तेन उक्तः पुमान् येन तदर्थोक्तपुंस्कम् । टा आदिर्यस्य स टादिः टादेरच् टाद्यच् तस्मिन् । तथाच येनार्थेन क्लीवे वर्त्तते तेनैवार्थेन यदि पुंसि वर्त्तते तदा टाद्यचि पुंवदित्यर्थः । टाद्यविशेषात् ङेऽपि उदाहरति अनादय इत्यादि । अनादिशब्दः प्रवृत्तिनिमित्तेन (१) पुंक्लीवयोर्वर्त्तते । अनादये अनादिने, एवं पटवे पटुने इत्यादि । टाऽजित्तु कर्त्रा कर्त्तृणा इत्यादि । पीलुने इति पीलुर्वृक्षभेदः, पीलोर्विकारः फलमित्यर्थे विहितस्याण्य "फले लुपि"ति

---

(१) आदिरहितत्वरूपेणार्थेनेत्यर्थः ।

## ४२४। ओदौतोऽव्वत् तक्षद्‌य-क्यङ्याः।

( ओत्-औतः ५।, अव्वत् ।१।, तक्षद्‌य-क्य-ङ्याः-१।। )।

ओदौद्भ्यां परस्तसंज्ञः क्षसंज्ञकय यः क्यङी च अव्वत् स्यात्।

बाभ्रव्यः। नाड़ायनः गार्ग्यायणः दाक्षायणी। पैतृष्वस्रीयः मातृष्वस्रीयः। रैवतिकः श्राम्रपालिकः। यादवः आङ्गिरसः।

---

सौवाजिः। एतेनान्येषां चेऽपि सौगार्ग्यं इत्यादि। माधव्यो विप्रः, अन्यत्र माधवः।

यकलान्ताल्लोहितादेः (१) ष्णास्य स्त्रियां ष्णायन्नित्यम्। तेन लौहित्यायनीत्यादि। कपेरन्तरापत्यं काप्यः, स्त्रियां काप्यायनी। एवं बौध्यः बौध्यायनी, वातण्ड्यः वातण्ड्यायनी। अनाङ्गिरसे तु कापेयः बौधिः, वातण्डः शिवादित्वात् ष्णः। अनाङ्गिरसेऽपि गर्गादित्वात् ष्ण्यः, वातण्ड्यः, स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित्।

४२४। ओदौ। ओश्च औश्च तत्तस्मात्, अजिव अव्वत्, तश्च क्षश्च तौ तक्षौ, त-क्षतोर्यः तक्षद्‌यः, तक्षद्‌यश्च क्यश्च ङ्यश्च ते। बाभ्रव्य इति—बभ्रोरपत्यं ष्ण्यः, ष्वोर्लोपौताविति उवर्णस्यौकारः, यस्याव्वद्भावात् यलायवावाव इत्यवादेशः। कौशिक एवाभिधानम्, अन्यत्र बाभ्रवः। तनुस्थाने तन्तुरिति पठत्यपरः। कतो मुनिविशेषः, तस्यान्तरापत्यं कात्यः, स्त्रियां कात्यायनी।

---

(१) गर्गादौ लोहितशब्दादारभ्य यकलान्तपर्यन्तेभ्यः शब्देभ्य इत्यर्थः।

कण्वादेः प्रयोजनमग्रे वक्ष्यते। गर्गादेराकृतिगणत्वात् वामरथशब्दः कण्वादौ ज्ञातव्यः। वामरथस्यापत्यं वामरथ्यः, व्वे तु वामरथाः, स्त्रियां वामरथ्यायनी वामरथ्यी, वामरथ्यस्यापत्यं युवा वामरथ्यायनः, वामरथ्यस्य छात्रा वामरथाः। सङ्घाङ्कघोषलक्षणानि वामरथानि, (१) वामरथशब्दादगोत्रेऽप्युपचारात् (२)।

कुर्व्वादेरपिङ्गोराजश्वशुरात्त्वनित्मनोश्च संच। कुर्व्वादेर्गोत्रेऽगोत्रे च ण्योऽपित् स्यात्, ण्य इत्यर्थः, गोराजश्वशुरेभ्यस्तु अनित् इत्शून्यो, य इत्यर्थः, मनोस्तु ययोगे संच, न इत्। कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि, स्त्रियां कौरव्यायणी कौरव्या। केचित् कौरव्यायणीति नित्यमाहुः। एवं लाक्षण्यः लाक्षण्यौ लाक्षण्याः। स्त्रियां लाक्षण्या इत्यादि।

कुर्व्वादिर्यथा—

कुरु कवि गर्गर-गणिका-कूटं, शकल शलाका सत्यंकारम्।
शाकः शुभ्रो मति-मद्रूपं, तथा लक्षण-वड़भीकारम्।
एरका-सुर केशोरि रथकारश्च पट्टिका।
पिण्डीमूलेन्द्रजाली वाक् शकम्भूरविमारकः (३)।

---

(१) वामरथस्यापत्यं वामरथ्यस्तस्येमानि (सङ्घाङ्कघोषलक्षणानि) इति वामरथानि। अत्र वामरथ्यशब्दात् सङ्घादिषु वाच्येषु "ञि ण्य-ट्वात् संघाङ्कघोषलक्षणे" इति वक्ष्यमाणवार्त्तिकेन इदमर्थे ण्णः, तस्मिन् अपत्यण्यस्य लोपे वामरथानीति। वार्त्तिकन्तु विकारश्चेति सूत्रस्य टीकाशेषे द्रष्टव्यम्।

(२) ननु वामरथशब्दस्य गर्गादित्वात् कथमपत्यसामान्ये ण्णः इत्यत आह वामरथशब्दादिति। उपचारात्—*गोत्रत्वारोपादित्यर्थः*।

(३) पिण्डीमूल, इन्द्रजालि, वाच्, शकम्भू अविमारक।

एकजित् श्यावनायश्च पितृभृत्-पथिकारिणौ ।
हन्ता भर्त्ता शूर्पणायो दामोष्णीषिरिनस्तथा (१) ।
भर्वः श्यावरथः श्यावपुत्रः सेनान्तदा मताः ।
कारवः, क्षत्रिये सम्राट्, केशिन्याः केशिनो भवेत् ।
एये भ्रातुर्वम् च तस्यैव (२) वेणः केनचिदीरितः ।
यमादित्यादितिश्चैवाऽपश्चाद्यादिपतिर्दितिः (३) ।

पश्चादिर्यथा—

पश्वश्व-कुल-राष्ट्रार्थ-गण-वास्तु-धनं वसु ।
विद्या-यत-नर-क्षेत्रं प्राण-धान्य-सभा-जगत् ॥

रथकारशब्दोऽत्र जातिवचनः, शिल्पिवचनस्तु कारुत्वेनैव प्राप्तः । यके भवतीति यकश्रूरिह पाठबलान्मकारागमः । हारिषेण्यः वैश्वक्सेन्यः, बाह्वादित्वात् हारिषेणिः वैश्वक्सेनिः । एवं ताल्वयाय्यः ताल्वयायिरित्यादि । सम्राजोऽपत्यं साम्राज्यः, क्षत्रियः । अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजिः । केशिन्या अपत्यं कैशिन्यः, एये केशिनादेशः, अन्यथा पुंवद्भावे (४) कैश्यः स्यात् । भ्रातुरपत्यं भ्रातृव्यः (५) एयस्य वम्, पितृष्वस्रादित्वात् भ्रात्रीयः । कस्य-

(१) दामोष्णीषि, इन ।

(२) भ्रातृशब्दात् एये कृते तस्य एयस्यैव वम् भवति, न इन् ।

(३) यम, आदित्य, अदिति, पश्चादिगण शब्दपूर्वक पतिशब्द, दिति ।

(४) पुंवद्भावसंक्षिप्तं ३०८ सूत्रस्य टीकायां द्रष्टव्यम् ।

(५) भ्रातृव्यो भ्रातृज द्विषौ इत्यमरः । भ्रातुः शत्रुरपत्यञ्च भ्रातृव्यौ । अत्र द्विट्पदे इति द्विवचनं, तेन सामान्यद्विडेव न तु भ्रातृद्विट् । भ्रातृपुत्रः शत्रुश्च भ्रातृव्याविति महेश्वरः । सम्मते भ्रातृशब्देन भ्राता शत्रुश्चेति अनव्ययम्—इति प्रबोधप्रकाशटीका ।

चिन्मते वेणशब्दस्य कुर्व्वादित्वात् वैण्यः, तथा च—वैण्यं पृथुं हैहयमर्ज्जुनञ्च इति। वेणाच्छन्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्यं याम्यः। आदित्यस्यापत्यम् आदित्यः, ण्ये ण्यलोपः(१) अदितेरपत्यम् आदित्यः। प्रजापतेरपत्यं प्राजापत्यः, एवं वैश्वपत्यः। दितेरपत्यं दैत्यः। पत्युत्त्यादियतैस्तु—पाशुपतः जागत्पत इति कुर्व्वादि। गोरपत्यं गव्यः। राज्ञोऽपत्यं राजन्यः, क्षत्रियेऽभिधानम्, अन्यत्र राजनः.मनुवर्ज्जेत्यादिना नियमेन न नलोपः, इनघन् इति नियमान्न उङ्लोपः। श्वशुरस्यापत्यं श्वशुर्य्यः, संज्ञायां बाह्वादित्वात् श्वाशुरिः। मनोरपत्यं मनुष्यः, ये षन्, न इत्। नाड़ायन इति—नड़स्यान्तरापत्यम् इति वाक्यम्।

नड़ादिर्यथा—

नड़ भण्डित रोहित शङ्ख पुटं
पद (२) काण चरं गिरि चक्र कुटम्।
बिद काश वनं कुल धूम जलं
किर चित्र सुरं खड़ लोह नरम्॥
भड़िलो भड़लो भड़िलः प्रकृति-(३)
चपलो नमकः खदिरो मिमतः।
चरकः शकटः शलभी बदरः
स्थिरकः खरपः सुमनोऽज-जनाः॥

---

(१) अदितिशब्दस्य कुर्व्वादौ पाठात् ण्ये आदित्यः, आदित्यशब्दस्यापि तत्र पाठात् पुनर्ण्ये यवोर्लोप इत्यकारयकारयोर्लोपः।

(२) पाद इति पाणिनीये।

(३) प्रकृतिरित्यत्र प्रकृत इति संक्षिप्तसारे, प्रकृत इति पाणिनीये।

सायक दासक किङ्कर दुर्ग
कातर काखल (१) पिङ्गल धूम्रम् ।
भण्डिल कौशल सुपक विशालम्
आतप चूप(२)मख विशम्पम् ॥

वोज: खरप पञ्चाल वामोदश्च धरित्रिण: ।
अश्मा गोमी च गोलाच (३) जलन्धर युगन्धरा: ॥
कुमार: शिंशपा काव्यो वीचार्हाविति विशेतिको (४) ।
आनडुह्यार्ज्जुनौ दण्डी श्यामो वाग्मी च सप्त च ॥
इष्क्रासुग्यो निगु: (५) काश्यो राजन्य तिक पिञ्जरा: ।
द्वीप: प्राणो दास मित्र सुञ्जार्या त्वण शूद्रका: ॥
चतुर्थोय: श्रविष्ठा च विश्वानरश्च हंसक: ।
मण्डपाकश्मन(६)स्तम्भ-खर्ज्जूर-चमसश्च चरम् ।
यौधो हस्तो वैश्य(७)वाघ्यौ सुकत्य: शोण-कामुकौ ।
ब्राह्मणोडुम्परालोह द्रोण जीवन्त पर्य्यता: ॥
समाऽन्धलाश्चदण्डं (८) स्यात् गणश्च तु द्यर्योगिके ।
वागिष्ठे तु वणौ विशे कण्गौ जातसु पूरुषे ॥

---

(१) काकल इति पाणिनीये ।
(२) पाणिनीये भट्टिप्रकारे च चूप इत्यस्य कुत्रचित्पाठो दृश्यते ।
(३) गोलाह इति पाणिनीये ।
(४) वीत, वर्ह इतिष इतिच ।
(५) शिग्रु इति पाणिनीये ।
(६) अश्मकटङ्क: पाणिनीये भट्टिप्रकारे च न दृश्यते ।
(७) वैश्य इति पाणिनीये भट्टिप्रकारे च ।
(८) सम अवन, अव, इयन ।

दर्भे आग्रायणो भर्गस्त्रैगर्त्ते शुनकस्तथा ।
वात्स्ये त्र्यपावग्निशर्म्मा स्याच्छरद्वांस्तु भार्गवे ॥
भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा ।
आत्रेयेऽथ ष्णायने च क्रौष्टोरुक् सदा मतः ।
ष्णान्ता ष्फान्ताश्च गोत्रार्थां ट्वान्ताश्च हरितादयः ॥

शिंशपाया अपत्यमित्यर्थे—आदाद्यचो णित्ते शिंशपा दित्य-वाट्-श्रेयो-दीर्घसत्र-देविकानाम् । शिंशपादीनां णित्ते परे आदाचः स्थाने त्रि-प्रसङ्गे आत् स्यात् । शांशपायनः (१) । आनडुह्य इति—गर्गादिष्णान्तः । अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनायनः । बाह्वादित्वादार्ज्जुनिः । एवं साम्बायनः साम्बिः, पञ्चानामपत्यं पाञ्चायनः, बाह्वादित्वात् पाञ्चिः । वैण्य इति—वेणो नाम राजर्षिस्तस्यापत्यं इवेकोश्मनाजादेरिति (२) ण्यङ्, वैण्यस्तस्यापत्यं युवा वैण्यायनः । अतएव ण्य-ट्व-क्षत्रियार्षेभ्य इति न लुक् । द्रौणायणोऽश्वत्थामा इति । पुत्रे पौत्रत्वोपचारात् । शलङ्कोरन्तरापत्यं शालङ्कायनः ष्णायने उतो लोपः । इदमकौशिके, कौशिके तु बाह्वादिः । वाष्पायनो वाशिष्ठः, अन्यत्र बाष्पिः । कार्ष्णायनो विप्रः, अन्यत्र कार्ष्णिः । जातस्यान्तरापत्यं जातायनः पुमान् । पुरुष इति

(१) शिंशपाया विकारः शांशपो दण्ड इत्यपि । दित्यो लाङ्गलं, तं वहतीति दित्यवाट् वृषभः तस्यायं दात्यौहः । दात्यूह इति कात्यायन । दितिं वहतीति दितिवाट् कश्यपस्तस्माज्जात इत्यर्थे दात्यूह इति कश्चित् । डाउक् इति ख्यातो जलचरपक्षिविशेष । श्रेयसि भवं श्रायसम् । दीर्घसत्रे भवं दार्घसत्रम् । देविका नदी, तत्र भवं दाविकमुदकं ( प्रयोगरत्नमाला ११६६ सू ) ।

(२) कुञ्जादेरिति ४२८ सूत्रस्य टीका द्रष्टव्या ।

किं? जाताया अन्तरापत्यं जातेयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायणः आग्रायणः (१) अन्यत्र दार्भिः। भार्गायणस्त्रैगर्त्तः (२), अन्यत्र भार्गिः। शौनकायनो वात्स्यः, अन्यत्र शौनकः, विदादित्वात् ट्रः। आग्निशर्म्मायणः ऋषिः, अन्यत्र बाह्वादित्वात् आग्निशर्म्मिः। शारद्वतायनो भार्गवः, अन्यत्र शारद्वतः, विदादित्वात् ट्रः। आत्रेयायणो भारद्वाजः, अन्यत्रात्रेयिः। भारद्वाजायनः शापायनश्चात्रेयः, अन्यत्र भारद्वाजः—ऋषि-ष्णः, शापिः—षतः ष्णिः। क्रोष्टोरपत्यं क्रौष्टायनः, उतो लुक् ष्णायने। इदमकौशिक इति कश्चित्। गोत्रविहितष्णान्ता गोत्रविहितष्णान्ताय नड़ादौ पठ्यन्ते, तस्मादेव नियमात् यूनि प्रत्ययः। मूले गार्ग्यायण इति गर्गस्यान्तरापत्यं गार्ग्यः, तस्यापत्यं युवा इत्यर्थे ष्णायनः, ष्णाति न ष्णस्य लोपः(३)। एवं वात्स्यायन इत्यादि। मूले दाक्षायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाक्षायणः, एवं प्लाक्षायण इत्यादि। स्त्रियां गर्गस्यापत्यं यूनी गार्ग्यायणी दाक्षीति स्त्रियां युव त्वनिषेधात्। दाक्षायणी तु दक्षस्यापत्यं दाक्षायणः, स्त्रियां षित्त्वादीप्। गोत्रार्थे इति किं? सोमो देवता अस्य सौम्यस्तस्यापत्यं सौम्यिः। सुतङ्गमस्य निवासः सौतङ्गमिस्तस्यापत्यं सौतङ्गमः, शेष-ष्णः। एवं ट्रान्ता हरितादयः। हरितस्यान्तरापत्यं हारितः, विदाद्यन्तर्गण-

---

(१) आग्रायणो मुनिभेदः।

(२) त्रिगर्त्तस्य मुने युवापत्यं त्रैगर्त्तः।

(३) ष्णकारघोषेणात्र आकारवर्ज्जनात्।

त्वात् टः, तस्यापत्यं युवा हारितायनः । परस्त्रिया अपत्यं(१) पारशवस्तस्यापत्यं युवा पारशवायन इत्यादि ।

पैलादेः (२) ष्फायनस्य लुक् । पैलादेः परस्य ष्फायनस्य यूनि विहितस्य लुक् स्यात् । पीलाया अपत्यं पैलस्तस्यापत्यं युवा पैलः । एवमुदीचोऽपत्यम् औदन्विस्तस्यापत्यं युवा औदन्विरित्यादि । पैलादिर्यथा—

पैल औदन्वि-औलिङ्गि सात्यकामिश सात्यकिः ।
औदव्रज्यौदमज्जौदशुद्धि(३)श्यालङ्कयस्तथा ।
गोपालङ्कौदमेघौ च दैवस्थान्यौदगायनौ ।
श्वाफल्कौदन्वितौ राहक्षतिर्दैवौलिङ्गायनिः ।

पैङ्गलायनि वाल्कायनि वैङ्गायनि वारुणि । ष्णन्तानामेषां "प्राचां ष्णेयावैद्यादे"रित्यनेन लुकि सिद्धे अप्राप्त्यर्थं पृथगुपादानम् ।

प्राचां ष्णेयावैद्यादेः । प्राचां गोत्रे यः ष्णिस्तदन्तात् यूनि विहितस्य ष्फायनस्य लुक् स्यात्, न तु वैद्यादेः । पन्नागारस्यापत्यं पान्नागारिस्तस्यापत्यं युवा पान्नागारिः । वैद्यादेस्तु

---

(१) परस्त्रीशब्दस्य परशादेशः । अत्र गोयीचन्द्रः—अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, रूढ्यर्थं शब्दः । ब्राह्मणेनोढायाः शूद्राया अपत्यं पारशवः, अन्यत्र तु पारस्त्रैणेयः ।

(२) अत्र वाल्यादेरित्यपि पाठः । बालस्यापत्यं बालिः तस्यापत्यं युवा बालिरित्युदाहरणञ्च ।

(३) कारिकायां हरिनामामृते मुग्धबोधे च उदशुद्धिरिति पाठो दृश्यते सिद्धान्तकौमुद्यान्तु उदशुद्धिरिति ।

विङ्कस्यान्तरापत्यं वैङ्किः तस्यापत्यं युवा वैङ्कायनः। धारणस्यान्तरापत्यं धारणिः तस्यापत्यं युवा धारणायन इत्यादि।

वैङ्क्यादिर्यथा—

> वैङ्कि धारणि वाल्मीकि प्राणाहतिश्च दैवतिः।
> तौल्वल्यासुरि-दैवोङ्कि पौष्पि-वैल्वकि-वैरकि॥
> कारेणुपालि-वैकर्णौ कालिङ्ग्याहिंसकौ तथा।
> चापेटक्यासिबन्धी पौष्करसादिश्च नैयमिः।
> दैवमत्यान्तरहती तथा दैवयजिर्मतः॥

न भरत गोत्राच। प्राच्यात् भरतगोत्राच यूनि विहितस्य लुक् स्यात्। अर्जुनस्यान्तरापत्यम् आर्जुनिस्तस्यापत्यं युवा आर्जुनायनः। पूर्व्वस्य बाधकोऽयम्।

पैतृष्वस्रेय इत्यादि। पितृष्वसुरपत्यमिति वाक्ये णीयः, णित्त्वाद्वृद्धिः, स्त्रियां पैतृष्वस्रीया, पैतृष्वस्रीयाभार्य्य (१) इत्यादि। पितृष्वस्रादिर्यथा—

> पितुःस्वसा तथा मातुः, स्वसा, भ्रातुरपिट् भवेत्।
> कुत्सायां णायनिश्चैव सौवीरगोत्रसम्भवः॥

भ्रातृशब्दात् णीयोऽणित्, तेन भ्रात्रीयभार्य्य इति (२)॥

सौवीरगोत्रसम्भवो णायनिः (३) कुत्सायां पितृष्वस्रादौ पठ्यते, तस्मादपि णायणीयः। यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं

---

(१) अत्र पुम्वत्कर्मधारयजातिमात्रत्वात् पुंवद्भावः।

(२) अत्र ञित्त्वाभावात् पुंवद्भावः।

(३) सौवीरगोत्रापत्येऽर्थे सम्भूतो यो णायनिप्रत्ययस्तदन्ताः शब्दा इत्यर्थः।

युवाऽणिञ्यः, यामुन्दायनीयो जाल्मः, रैवत्यादित्वात् यामुन्दायनिकः। एवं सौयामायनीयः सौयामायनिकः, वार्ष्यायणीयः वार्ष्यायणिकः। तथाच—

यमुन्दश्च सुयामा च वार्ष्यास्तेभ्यः फिञः (१) स्मृताः।
सौवीरेषु च कुत्सायां द्वौ योगौ प्रष्टविस्मरेत्॥

इति महावृत्तिः।

द्वौ यौवणिकौ। णित्वाभावे पूर्ववत् प्रयोजनम् (२)।

रैवतिक इति—रेवत्या अपत्यम् इति वाक्यं, ययोरित्यादिना ईकारलोपः त्रिष, स्त्रियां रैवतिकी। आश्वपालिक इति अश्वं पालयतीति अश्वपालः अण्, तस्यापत्यमिति वाक्यम्।

रैवत्यादिर्यथा—

रैवत्यश्व-मणि-द्वारपूर्वपालोऽथ कुलने (३)।
गोत्रस्त्रियश्च (४) बाहुल्यादृष्टाः सौवीरगोत्रजाः॥
कर्णग्राह-वृकग्राही कुक्कुटाचस्तथैव च।
वृकवञ्ची सवर्णा च परे शिष्टप्रयोगतः॥

अश्व-मणि-द्वारेभ्यः पालो रैवत्यादौ पठ्यते। जयादित्यस्तु अश्वपाली मणिपाली द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति। न्यासे तु द्वारपालादीनामदन्तनिर्देशः। अथानन्तरं गोत्रविहितत्वात्ताः

(१) पाणिनीये फिञ्प्रत्ययः, सर्ववर्मगोयमते णायनिः।
(२) पुंवद्भावसिद्धिरित्यर्थः।
(३) पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सेति काशिका।
(४) पौत्रप्रभृत्यपत्यं गोत्रं, तथाभूता याः स्त्रियः गोत्रस्त्रियः।

स्त्रीलिङ्गाः कुत्सायां रेवत्यादौ पठ्यन्ते। यथा—गार्ग्या अपत्यं युवा गार्गिको जाल्मः, ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायनिको जाल्मः, मिमतादित्वात् गार्गः ग्लौचुकायनश्च जाल्मः। गोत्रेति किम्? कारिकेयो जाल्मः। स्त्रियः इति किम्? औपगविः। कुत्सायामिति किम्? गार्गेयो माणवकः (१)। कुत्सन इत्येव, तेन सौवीरगोत्रे ये वृद्धास्तेऽपि कुत्सायां बाहुल्याद्रेवत्यादौ पठ्यन्ते। भगवित्तस्यापत्यं भागवित्तिस्तस्यापत्यं युवा भागवित्तिको जाल्मः, बाहुल्यात् पक्षे यथाप्राप्तं भागवित्तायनो (२) जाल्मः। तृणबिन्दोरन्तरापत्यं तार्णबिन्दवः तस्यापत्य युवा तार्णबिन्दविकः। आकशापस्यान्तरापत्यम् अचरादेराकृतिगणत्वात् आकशापेयः, तस्यापत्यं युवा आकशापेयिकः। अन्ये तु अश्वादिपठितत्वात् आकशायनशब्दस्यैव आकशायनेयिको जाल्मः इति वदन्ति, तन्न।

तथाचाहुः—

भागपूर्व्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः।
तृतीयस्त्वाकशापेयो गोत्रात् (३) ठग्बहुलं ततः (४)॥

इति परे।

---

(१) अत्रापि गार्ग्या अपत्यं युवेति वाक्यम्। "मातामहादेरपत्यार्थोऽयं प्रयोग इति नास्ति कुत्सा" इति काशिका।

(२) गोत्रप्रत्ययान्तानां नडादौ पाठात् फक्प्रत्ययः।

(३) गोत्रात् गोत्रविहितप्रत्ययान्तात्।

(४) ततस्तस्मात् भागवित्त्यादिशब्दरूपात्।

४२५। मनुवर्ज्जानुवर्म्मोचस्येनोऽनोऽध्वात्मनो-पत्यणोऽविकारणाभावकर्म्मय ईने न न लोपः।

( मनुवर्ज्जानुवर्म्मोचस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यणे ७।, अविकारणाभावकर्म्मये ७।, ईने ७।, न ।१।, न-लोपः १। )।

---

ठक् णिकः। इहग्रहणमिह स्त्रीनिहत्त्यर्थम् (१)। सौवीरगोत्रजा इति किम्? औपगविर्जाल्मः। कुत्सायामिति किम्? भागवित्तायनो माणवकः।

येमानुदाहरति यादव इति—यदुर्नाम कश्चित्, तस्यानन्तरापत्यार्थे णः। आङ्गिरस इति—अङ्गिरसोऽपत्यम् इति वाक्यम् (२)। मुनौ तु शिवादित्वात् (३)। एवम् औपगवः माधवः मारीच इत्यादि।

४२५। मनु। मनं वर्ज्जयतीति मनुवर्ज्जः, स चासौ अन् चेति मनुवर्ज्जान्, स्यादिन् स्येन्, मनुवर्ज्जान् च वर्म्मा च उचा च स्येन् च तत्, मनुवर्ज्जानुवर्म्मोचस्येन् तस्य। अध्वा च आत्मा च तत्तस्य। न विकारोऽविकारस्तस्मिन् णः अविकारणः, भावश्च कर्म्म च तौ भावकर्म्मणी, न भावकर्म्मणी अभावकर्म्मणी,

---

(१) सौवीरगोत्रजा इत्युक्तेरपत्यप्रत्ययान्ता सौवीरगोत्रोत्पन्नवाचकाः शब्दा गृह्यन्ते। ते चापत्यप्रत्ययान्तत्वादादिस्वरवृद्धौ इहसंज्ञका भवन्ति, तथापि इह ग्रहणं, तथाविध-स्त्रीलिङ्गशब्द निहत्त्यर्थमिति भाव।

(२) अत्र अङ्गिरा नाम कश्चित।

(३) शिवादौ कुर्वंशस्यकश्चस्य इत्युक्ते।

मन्वर्ज्जस्यानो वर्म्मणः उक्षः स्यात् परस्येनश्च अपत्यार्थे-ण्यो, अनो विकारार्थवर्ज्जे ण्ये भावकर्म्मार्थवर्ज्जे ये च, अध्यात्मनो-रीने, न लोपो न स्यात् । याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः ।

ग्रैवः वार्शिष्ठः ।

---

तयोर्यः अभावकर्म्मयः, यथात् अविकारण्यश्च अभावकर्म्मयश्च तत्तस्मिन् । याज्वनः इति—यज्वनोऽपत्यम् इत्यर्थे ण्यः ल्योर्लोपोतौ तिऽघे इति प्राप्तनलोपोऽनेन निषिध्यते । मन्वर्ज्जे इति किं ? भाद्रसामः सौसाम. । अपत्यण्य इति किं ? चर्म्मणा परिवृतो रथः चार्म्मणो रथः (१) । मन्वर्ज्जेनित्युक्तेः वर्म्मणो वर्ज्जने प्राप्ते वर्म्मग्रहणादाह भाद्रवर्म्मणः इति--भद्रवर्म्मणोऽपत्यम् इति वाक्यम् । एवं गार्ग्यवर्म्मण इत्यादि । औक्ष्ण इत्यादि---यद्यपि मन्वर्ज्जेत्यनेन नलोपप्रतिषेधादुक्ष्णोऽपि प्रतिषेधः सिध्यति, तथा-प्युक्ष्णः पृथग्ग्रहणमेवं ज्ञापयति, अपत्यण्यातिरिक्ते ण्ये नलोप-निषेधो न भवति, तेन औक्षं पदमित्यत्रानोऽविकारण्ये (२) निषेधो न स्यात् । चाक्रिण इति—चक्रिणोऽपत्यम् इति वाक्य, एनो न नलोपः । अस्य सूत्रस्य योगविभागः कर्त्तव्यः, तेन क्वचिद-न्यत्रापि (३) । तथाहि---

---

(१) अत्र मनन्तत्वान्नलोपे प्राप्ते अपत्यार्थण्याभावान्न नलोपः ।

(२) औक्षमित्यत्र इदमर्थविहितण्ये इत्यर्थः ।

(३) अप्रतिषिद्ध-नलोपोऽपि न स्यादिति शेषः ।

ब्रह्मणो जातावपत्यण्णे। ब्रह्मणोऽपत्यण्णे नलोपो न स्यात् जातौ। ब्रह्मणोऽपत्यं ब्राह्मणो जातिः (१)। अपत्यण्ण इति किं? ब्राह्मी नामौषधिजातिः। जातौ किं? ब्रह्मणोऽपत्यं ब्राह्म इति।

पणि गणि गाथि केशि विदथिनो वा तु हितनाम्नः। एषामपत्यण्णे नलोपो न स्यात् हितनाम्नस्तु वा। पणिनोऽपत्यं पाणिनः, एवं गाणिनः गाथिनः कैशिनः वैदथिनः। हितनाम्नोऽपत्यं हैतनाम्नः हैतनामः।

इनोऽकलाप्यादेरनपत्ये। इनो नस्य लोपो न स्यात्, न तु कलाप्यादेः अनपत्यण्णे परे। स्राग्विणः मैधाविनः। अपत्ये तु मैधाव इत्यादि। कलाप्यादेस्तु कलापिन इदं कालापम्। कलाप्यादिर्यथा—

कलापी पीठसर्पी च कुथुमी तैतिली तथा।
जाजली लाङ्गली स्यात् सब्रह्मचारिशिखण्डिनौ।
कलाप्यादौ शिलाली च नव शब्दाः प्रकीर्त्तिताः॥

कर्म्मचर्म्मणोरताच्छील्यकोपयोः। ताच्छील्यभिन्ने कर्म्मणः कोपभिन्ने चर्म्मणो नलोपो न स्यादनपत्यण्णे। कार्म्मणं चार्म्मणम्। अताच्छील्यकोपयोरिति किम्? कार्म्मः कर्म्मशीलः, चार्म्मः कोपः।

दण्डिहस्तिनः ष्णायने, जिह्माशि वासिनोस्तु ष्णेयष्णायन्योः। नलोपो न स्यात्। दण्डिनोऽपत्यं दाण्डिनायनः, एवं हास्तिनायनः। जैह्माशिनेयः वासिनायनिः।

(१) अत्र मनन्तत्वापि अपत्यण्णे न नलोपः।

पात्स्ये विकर्णोऽथ क्षीरह्रदः परिषिकोऽपि च ।

दशरथः कनीनश्च कन्यायाः ष्णो भवेत्तथा ॥

त्रिवेण्यास्त्रिवणो विश्रवसस्तु रवणोऽपि च ।

विश्रवणो मनोर्व्वा सन् गणसूत्रप्रमाणतः ॥

इह्वादन्तानां पाठः ष्णिबाधनार्थः। इञजिकारान्तानां स्त्रीत्यान्तानाञ्च ष्णेयबाधनार्थः। तक्षन्—शब्दस्य कारुवाचकत्वात् ष्णिबाधनार्थः। तक्ष्णोऽपत्यं ताक्ष्णः, मनवर्ज्जान् इति अमन्तत्वात् नलोपो न स्यात्, कुर्व्वादित्वात् ताक्षण्यः। गङ्गाया अपत्यं गाङ्गः, अत्र्यादित्वात् गाङ्गेयः, तिकादित्वात् गाङ्गायनिः। पीलाया अपत्यं पैलः, अत्र्यादेराकृतिगणत्वात् पैलेयः। परे तु क्वचित् अपवादविषये उत्सर्गोऽभिनिविशत इति न्यायात् इत्याहुः। एवं सात्वाशब्दस्याप्युदाहरणीयम्। जरत्कारुशब्द जअन्तस्तन्वादिपाठात्। ऋष्टिषेणशब्दस्य षेनान्तत्वात् ष्णिबाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोपन्ना वृष्णिवंशोत्पन्नाश्च सर्व्वे शिवादौ पठ्यन्ते। कुरोः—नाकुलः, साहदेवः। ऋषेः—मूले वाशिष्ठ इति—वशिष्ठस्यापत्यम् इति वाक्यम्, एवं वैश्वामित्रः। अन्धकस्य—श्वाफल्कः, तौवंसः। वृष्णेः—वासुदेवः, आनिरुद्ध इत्यादि। ननु सर्व्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्व्वन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्य, शिवस्य सर्व्वज्ञत्वात् तत्र तेषां सङ्कलनम्। यद्वा ऋषेरनादित्वात् कुर्व्वन्धकवृष्णिवंशा एवानादयः, अतएव तेभ्यस्त्यविधानमित्यदोषः। पहवानां मानुषीसंज्ञानां तावत्—

चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः। अहृद्यानां नदीसंज्ञकानां तावत्—यमुनाया अपत्यं यामुनः, इरावत्या अपत्यम् ऐरावतः नार्मद इत्यादि। अहृद्या इति किं? वासवदत्तेयः चान्द्रभागेयः (१)। शुङ्गस्यापत्यं शौङ्गो भारद्वाजः, अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः, अन्यत्र छागलायनिः। विकर्णस्यापत्यं वैकर्णो वात्स्यः, अन्यत्र वैकर्णिः। कन्याया अपत्यं कानीनः कर्णः व्यासश्च। त्रिवेण्या अपत्यं त्रैवणः। विश्रवसोऽपत्यं रावणः वैश्रवणश्च। मनोरपत्यम् इत्यर्थे ष्णः, तस्मिन्मनोः सन् वा, न इत्, मानुषः पक्षे मानव इति।

विदादेर्गोत्रेऽन्त्यस्वानन्तर्ये ट्णः। (२) विदस्यान्तरापत्यं वैदः। एवम् और्व्वः। स्त्रियां पित्वादीप् वैदी इत्यादि।

विदादिर्यथा—

विद उर्व्वो भरद्वाजः किलातः कुशिको हरित्।
विश्वानरः कश्यपोऽपस्तम्बो द्वह-रथीतरौ॥
कूचवारशरद्वन्तौ रथन्तरगविष्ठिरौ।
ऋष्टिषेणश्च किन्दर्भौ मठरौ विश्वविष्टपि॥
पुनर्भूर्दुहिता पुत्रः प्रतिबोध-ननान्दरौ।
हर्यश्वः प्रियको धेनुर्बभ्रोग-शुनकावपि॥

---

(१) अत्र चन्द्रभागा-पर्याय-चान्द्रभागा-चान्द्रभागीशब्दयोरन्यतरस्मात् ष्णेयः। अन्यथा इदन्तं न स्यात्।

(२) विदादेर्गोत्रापत्यार्थे ट्णः स्यात्। अपविदस्त्रिणर्णयोपे द्रष्टव्या।

ऋतभागश्च किन्दासी व्ययस्वाकान्विका अपि ।
महाकुलः पृदाकुश्च निषादोऽथ परस्त्रियाः—
परशुष्टे, गोपवन. शिग्रु भामज विन्दवः ।
अश्वावतार श्यामाक-श्यापर्णाः समुदीरिताः ॥

अत्र ये शब्दा ऋषिवाचकास्तेभ्योऽनन्तरापत्य एव टुः । अतएव पौत्रः पौनर्भवः दौहित्र इत्यादि । ननु कथ कुशिकस्यानन्तरापत्यं कौशिको विश्वामित्रः, कथं वा व्यवहितापत्ये इन्द्रहूर्नाम सप्तमः काश्यपानाम् ब्वेऽलुक् ? इति (१) चेत् सत्यं, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् ऋषियोगेन (२) भवितव्यम्, अथवा तस्येदमित्यर्थे योगेन । परस्त्रिया अपत्य पारशवः, टु परशादेशः । अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, अतएव पारशवो विदुरः । तथाच—पारशवः पुमान्, परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः । अर्थान्तरे तु पारस्त्रैणेयः । बाह्वादेराकृतिगणत्वात् विदस्यानन्तरापत्यं वैदिरित्यादौ णिः, न तु ऋषिणः । यद्यपि शिवादित्वात् ष्णे कृते वैद इत्यादि सिद्ध्यति, तथापि विदादेः पृथक् टुविधानं मयड्बाधनार्थम् ।

---

(१) काश्यपानामित्यत्र काश्यपशब्दस्य विदादिपाठात् विदादेर्गोत्रे इति वार्त्तिकसूत्रेण बहुवचनविहितस्य टुप्रत्ययस्य यस्कगर्गयस्कविदादीत्यादि सूत्रेण कथं न लुग्भवतीत्याशङ्क्याह क्वचिदित्यादि । गर्गयस्कविदादिसूत्रे तर्कवागीशेन विदादेः परस्य टुप्रत्ययस्यैव लुग्भवतीति वक्ष्यते । अत्र तु ऋषियोगेन टुप्रत्ययेन वा साधितत्वात् लुगित्यर्थः ।

(२) शिवादित्वादिति शेषः ।

उत्सादेश्च । उत्सादेष्ट्टः स्यात्, पृथग्योगादपत्यसामान्ये । उत्सस्यापत्यम् औत्सः, जानपद इत्यादि ।

उत्सादिर्यथा—

उत्सो जनपदविनदौ धन्वा, विकच-महानद-तरुणं धेनुः ।
भरत-महानस-पृथिवी देवं, पङ्क्तिर्जगती कुरु-पञ्चालम् ॥
उदपान महाप्राण-ककुभस्त्वलुनो महान् ।
इन्द्रावसान-विकर-त्रिष्टुबुष्णिगनुष्टुभः ॥
उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः ।
बृहन्मध्यन्दिनश्चाथ सत्वतो शुण् भवेदिह ॥
उदस्थानन्तु देशेऽस-वञ्चकयो(१)ऽंशे हृपन्मतः (२) ।
ग्रीष्मोऽहत्ते समाख्यातः शेषं ज्ञेयं प्रयोगतः ॥

इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरव इति जयादित्यः । सत्वत्शब्दो वत्वन्तस्तस्य ट्टे शुण्, सत्वतोऽपत्यं सात्वतः । पाठबलात् उदस्थाने भव औदस्थानो देशः । अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः । हृपद्शब्दोऽंशे वाच्ये ट्टः वार्षदः, अनंशे तु वार्षदः ष्णः । ननु ष्णट्टयोः को विशेष इति चेत् सत्यं, ष्णान्तवार्षदस्य स्त्रीं वार्षदकः । ट्टान्तस्य तु वार्षद इति विशेषः। अहत्त इति—हत्तं छन्दः, न हत्तम् अहत्तं तस्मिन्, ग्रैष्मः । अहत्त इति किं ? ग्रैष्मी त्रिष्टुबिति ऋतुनक्षत्रा-दिति ष्णः, तस्यादिकारे मयट् ग्रैष्ममयं, ट्टान्तादिकारे ग्रैष्ममिति विशेषः ।

---

(१) वर्ने बक्षमार्थे वञ्चक । (२) पाणिनीये हृषदित्यत्र हृपदिति पाठ ।

४२६ । सङ्ख्यासम्भद्रान्मातुर्डुर् णौ ।

( सङ्ख्या-सं भद्रात् ५।, मातुः ६।, डुर् ।१।, णौ ७ ) ।

द्वैमातुरः ।

४२७ । नन् पुंस्त्रियोः । ( नन् ।१।, पुंस्त्रियोः ६॥ ) ।

पौंस्नः स्त्रैणः ।

४२८ । कुञ्जादेर्णायन्योऽस्त्रीत्वेऽपत्ये ।

( कुञ्जादेः ५।, णायन्यः १।, अस्त्रीत्वे ७।, अपत्ये ७। ) ।

कुञ्जादेरपत्यार्थे णायन्यः स्यात्, न तु स्त्रियां, न च त्वे ।

कौञ्जायन्यः ब्राध्नायन्यः । स्त्रीत्वे तु कौञ्जायनी कौञ्जायनाः ।

---

४२६ । संख्या च सम् च भद्रच तत्तस्मात् । सख्यावाचकात् समो भद्राच परस्य मातृशब्दस्य डुर् स्यात् णौ, डित्वादन्त्यस्य । सौत्वात्र विः । द्वैमातुर इति—द्वयोर्मात्रोरपत्यमिति वाक्यं, शेषात् ण्यः, एवं षाण्मातुरः ।

४२७ । नन् । पुमांश्च स्त्री च ते तयोः । अनयोर्नन् स्यात् णौ ।

४२८ । कुञ्जादेः । स्त्री च त्वं च स्त्रीत्वं, न स्त्रीत्वम् अस्त्रीत्वं तस्मिन् । अपत्यग्रहणं, पूर्वेण सामान्यविधानात् । अयं(१) नड़ादान्तर्गणः णायन्येन णायनो बाध्यते, तेनानन्तरापत्ये कौञ्जिः । कौञ्जायन्य इति—कुञ्जस्यान्तरापत्यमिति वाक्यम् । एवं ब्राध्नायन्यः ।

---

(१) अयं कुञ्जादि ।

कुञ्जादिर्यथा —

कुञ्जो ब्रध्नो बुधो लोम-भस्म-शङ्खाः शठो गणः ।
शाकः शुभ्रा विपाशा च शुण्डा स्कम्भः प्रकीर्त्तितः ॥

तिकादेर्णायनिर्वृषादेस्तु यम् च ।

तिकादेरपत्ये णायनिः स्यात्, वृषादेस्तु णायनिर्यम् च, म इत् । तिकस्यापत्यं तैकायनिः, कितवस्यापत्यं कैतवायनिः ।

तिकादिर्यथा —

तिक कितवौरस-तैतिल नीड़,
भौरिकि भौलिकि-वन्ध्यारब्धम् ।
चौपयतः कुरु-संज्ञा यत्र
गङ्गा लाङ्कट-शूद्र यमुन्दम् ।
खल्यका लोमको कम्य-ग्राम्य-ध्वाजयता सरः ।
शाख्या वालशिखा वैद्ययतः शैकयतस्तथा ॥
चैटयतः स्वग्रामोऽथ कौरव्यः क्षत्रिये मतः ।
गोकक्ष्यचन्द्रमाः चैतयतो रथान्तदा मताः ॥
द्व्यचः प्रान्ता दैवरथोऽभिशोदन्यं (१) प्रकीर्त्तितम् ।

क्षत्रियार्थ-कौरव्यः पठ्यते (२), तेन जनपद-प्रान्तस्य ग्रहणं न तु कुर्व्वादि-प्रान्तस्य, स तु प्राच्यपथवचनत्वात् प्रोर्लुगेव । जनपद-प्रान्तात्तु कुरोरपत्यं युवा कौरव्यायणिः क्षत्रियः । रथान्तात्तावत्—गौरथस्यापत्यं गौरथायणिः, पाम्ररथायणि-रित्यादि । द्व्यचः प्रान्तात्तावत्—कर्प्पुरपत्यं कार्पः, तस्यापत्यं

(१) अभिन् इदन्द ।　　(२) एव कुरपक्षेनैव चैव ।

कार्त्रायणिः । अन्यत्र कर्त्तृशब्दो ब्राह्मणवचनः, तेनात्र अब्राह्मणात् णायनेर्न लुक् । एवं कैशायनिः, ग्रैवायनिः । द्व्यच इति किम् ? औपगविः, अतः णिः ।

हृयादिर्यथा —हृय दगु कोशल छाग कर्म्मारा: ।

हृयादेस्तावत्—हार्य्यायणिः दागव्यायनिः कार्म्मार्य्यायणिः, कुर्व्वादित्वात् कार्म्मार्य्यः । कोशलशब्दोऽत्र जनपदवचनः । ननु कथं कौशल्यायनिवल्लभामिति भट्टिः । उच्यते—वृद्धातेरित इति ईपि कौशल्यायनी, तस्या अपत्यं युवा इत्यर्थे भावादित्वात् ष्णेयस्तस्य लुकं विधाय स्त्रीत्वस्य लुकि कौशल्यायनिरिति परे । वस्तुतस्तु तिकादेराकृतिगणत्वात् णायनिरिति । तथा च कौशल्यकार्म्मार्य्याभ्याञ्चेति पाणिनिसूत्रम् ।

वृद्धादनपत्यान्ताद्वा पुत्रान्ताद्वाकिनादेस्तु कंच । अनपत्यान्ताद्वृद्धसंज्ञकात् णायनिर्व्वा स्यात्, पुत्रान्तात् वाकिनादिभ्यश्च, तेषां तु कन् च स्यात् न इत् । आम्रगुप्तस्यापत्यम् आम्रगुप्तायनिः नापितायनिः । एवं त्यादायनिः, तवापत्यं त्वादायनिः, युवयोर्युष्माकं वा अपत्यं यौष्मदायनिः । कथं भावतायनिः ? वाशब्दस्य व्यवस्थावाचित्वात् । पक्षे आम्रगुप्तिः नापितिः त्यादस्तस्यापत्यं युवा त्यादायनिः । वृद्धादिति किं ? दैवदत्तिः याज्ञदत्तिः औपगव. । अनपत्यादिति किम ? औपगविः । पुत्रान्तात् – गार्गीपुत्रकायणिः । गार्गीपुत्रायणिरिति पूर्व्वेणैव सिद्धे कन्विधानार्थः पाठः, णायन्यभावपक्षे गार्गीपुत्रिरिति रूपत्रयम् । वाकिनादेस्तावत्—वाकिनकायनिः वाकिनायनिः वाकिनिः ।

वाकिनादिर्यथा—

वाकिनयर्म्मि गारेधी काकी-लङ्का तथैव च ।
कार्कव्यवर्म्मिणावत्र बुधैः सप्त प्रकीर्त्तिताः (१) ॥

परे तु कनं न विकल्पयन्ति, तन्मते वाकिनादेर्द्वैरूप्यम् ।

भद्रहादायनिर्व्वा । वाशब्दो बहुलार्थः । ह्रदसंज्ञकभिन्नादायनिर्व्वा स्यात् अपत्ये । ग्लुचुकस्यापत्यं ग्लुचुकायनि, पक्षे ग्लौचुकिः । आह्विसुम्बकायनिः आह्विसुम्बकिः । बाहुल्यात् क्वचिन्न भवति, तेन दक्षस्यापत्य दाक्षिः प्लाक्षिरित्यादि ।

यूनि लुक् ण्णायनेः ण्णस्य । ण्णायनेः परस्य यूनि विहितस्य ण्णास्य लुक् स्यात् । तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनिरित्यादि ।

कुलाददादिनो (२) येनणेयका दादेस्त्वीनः । दादिभिन्नात् कुलात् य ईन ण्णेयक एते स्युः दपूर्व्वादीन एव । कुलस्यापत्यं कुल्यः कुलीनः कौलेयकः, बहुकुल्यः बहुकुलीनः बाहुकुलेयकः, बहुलग्रहणादत्वात्(३) । दादेस्तु आढ्यकुलीनः श्रोत्रियकुलीनः ।

---

(१) वचनं वाक् सोऽस्यास्तीति वाग्मिन्, अतएव निपातनादिनम् । गमारे धत्ते इति गारेध पृषोदरादित्वादिकोप [illegible] घटक्रम गारेधकायनिः । [illegible] इति [illegible] । इति तत्त्वबोधिनी ।

(२) [illegible] दादिना—दं पदम् आदिर्यस्य तत् दादि, न दादि अदादि तस्मात् अदादिनः । [illegible] ।

(३) [illegible] बहुलग्रहणे [illegible] अदादिभिन्नादित्यर्थं ।

दुर्महद्भ्यां णेयक-णीनौ वा। आभ्यां परात् कुलात् णेयक-णीनौ क्रमाद्वा स्याताम्। दौष्कुलेयकः, अश्वादित्वात् दौष्कुलेयः, पक्षे दपूर्व्वत्वात् दुष्कुलीनः। माहाकुलीनः, उत्सादित्वात् माहाकुलः पक्षे महाकुलीनः।

क्षत्रादियो जातौ। क्षत्रशब्दाज्जातावपत्ये इयः स्यात्। क्षत्रियः जातिः। जाताविति किम्? क्षात्रिः।

सौवीरगोत्रात् फाण्टाहृति मिमतात् ण-णायनौ। सौवीरगोत्रात् फाण्टाहृतेर्मिमताच्च ण-णायनौ स्याताम्। फाण्टाहृतेरपत्यं युवा फाण्टाहृतः। सौवीरगोत्रत्वात् यूनस्य विषयः; फाण्टाहृतायनिः। एवं मिमतस्यापत्यं मैमतः मैमतायनिः। परे तु अल्पाच्तरस्य व्युत्क्रमनिर्देशात् (१) यथासंख्यमिच्छन्ति, तन्मते फाण्टाहृतः मैमतायनिरित्येव। सौवीरगोत्रादिति किम्? फाण्टाहृतायनः मैमतायनः।

देवपृथिवीभ्यां ण्यणौ वा। आभ्यां क्रमेण ण्य-णौ वा स्याताम-पत्ये। देवस्यापत्यं दैव्यः, पृथिव्या अपत्यं पार्थिवः, स्त्रियां दैव्या पार्थिवा, उत्सादित्वात् दैवः पार्थिवः, दैवी पार्थिवी।

स्थामान्तादो लोमान्तात्तु ब्वे। स्थामन् इत्यन्तादः स्यात्, लोमान्तात्तु ब्वे। अश्वत्थामा नाम कश्चित्, तस्यापत्यम् अश्वत्थामः उडुलोम्नोऽपत्यानि उडुलोमाः। ब्वे किम्? औडुलोमिः औडुलोमी।

---

(१) सूत्रे मिमतफाण्टाहृतेरित्यनुक्त्वा फाण्टाहृतिमिमतादित्युक्तेरित्यर्थः।

रूढ़ाद्राज्ञि च ट्ठः, ण्यात्तु द्वाड्-मगध-कलिङ्ग-शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् ट्ठः स्यात्, द्वाड् मगधादेश्च ण्यः। पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः, वैदेहः। द्वाजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः। रूढ़ादिति किम्? पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः।

वृद्धेत्कोशलाजादादगान्धारि-शाल्वेयात् ण्यड्। गान्धारिशाल्वेयभिन्नात् वृद्धादिकारान्तात् कोशलादजादाच्चापत्ये राजनि च ण्यड् स्यात्। ट्ठण्योरपवादः। वृद्धात्—आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः, सौवीरस्यापत्यं राजा वा सौवीर्य्यः। इकारान्तात्—कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्यः, अवन्तेरावन्त्यः, कोशलस्य कौशल्यः, अजादस्य आजाद्यः, स्त्रियामजादित्वादाप्, आम्बष्ठ्या कौशल्या आजाद्या। कौन्त्यावन्त्ययोस्तु कुन्ती अवन्ती। कुरुकुन्त्यवन्तिभ्योऽपत्य त्यस्य लुकि नृजातेरिति इति ईप्। डित्त्वात् पतिपुत्रादौ यङ ई, आम्बष्ठीपतिः आम्बष्ठीपुत्र इत्यादि। गान्धारि-शाल्वेयात्तु गान्धारः शाल्वेयः, पूर्व्वेण ट्ठः।

कुर्व्वादिभ्यो ण्यः पाण्डोर्डिच। कुरोर्निपूर्व्वशब्देभ्यो जनपदेभ्यो ण्यः स्यात् अपत्ये राज्ञि च, डिच पाण्डोः। कुरोर्जनपदस्यापत्यं राजा वा कौरव्यः, कथं माघे—"कुकुरकौरवस्त्रियः," तथा वेणीसंहारे—"संरब्धतां कौरवा" इति? उच्यते—जनपदाविवक्षायां, विषयो देश इत्यर्थे ष्णो वा (१) तस्येदमित्यर्थे

(१) विकारवहुरेति षष्ठस्य टीकायां बहुर्थविचारात् परं "विषये देशे" इति वार्त्तिकसूत्रं द्रष्टव्यम्।

४२८। गर्ग यस्क विदादि भृग्वत्रि कुत्साङ्गिरो वशिष्ठ गोतम रूढ़ाल्लुग् व्वेऽस्त्रियाम्।

( गर्ग—रूढ़ात् ५।, लुक् ।१।, व्वे ७।, अस्त्रियां ७। )।

---

वा। कथमचत्रिये "कौरव्याः पशव" इति? उपचारात्। न्यादेः—निधनस्यापत्यं राजा वा नैधन्यः नैपुण्यः नैवध्यः। पाण्डोर्जनपदस्य चत्रियस्यापत्यं राजा वा पाण्ड्यः, डिति टिलोपः। रूढ़ इति किं? महाभारते पाण्डोरपत्यं पाण्डवः। न हि तत्र पाण्डुर्देशः।

उडुम्बरादेः (१) ञिः। रूढ़ादपत्ये राज्ञि चेति। ट्यस्य बाधकः। उडुम्बरस्य जनपदस्य चत्रियस्यापत्यं राजा वा औडुम्बरिः तैलखलिः।

उडुम्बरस्तिलखलो मद्रकारो युगन्धरः।
भूलिङ्गः शरदण्डश्च कलकूटोऽश्मकस्तथा।
प्रत्यग्रथो नव प्रोक्ताः परे शिष्टप्रयोगतः॥

केकय-प्रलय-मित्रयूनां यित्ते यादेरियः। एषां यादेर्भागस्य यित्ते इयादेशः स्यात्। केकयस्यापत्यं कैकेयः, प्रलयादागतं प्रालेयं हिमं, मित्रयोर्भावः मैत्रेयिका, गोत्रचरणाघ्नकः।

४२८। गर्ग। गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः, ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च

---

(१) उडुम्बरादेरित्यपि पाठ।

देशतुल्याख्यः चचियो रूढ़ः। एभ्यः परेषामुक्तानां त्यानां व्वे विहितानां लुक् स्यात्, न तु स्त्रियाम्।

गर्गाः वत्साः, यस्काः लज्जाः, विदाः उर्व्वाः, भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः, अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।

---

गोतमश्च रूढ़श्च तत्तस्मात्। रूढ़शब्दस्य व्युत्पत्तिमाह देशतुल्याख्य इत्यादि। तथाच गर्गादि-ष्यः, यस्कादि-ष्य-ष्यायन-ष्णि-ष्णेयाः, विदादि ट्टः, अत्रि-ष्णेयः, भृगुकुत्साङ्गिरोवशिष्ठगोतमष्याः, रूढ़-ष्यार ट्ट षड् ष्य ष्णि इत्येषां व्वे लुगित्यर्थः। क्रमेणोदाहरति गर्गा इत्यादि। ऋद्वयोस्तु गार्ग्यः गार्ग्यौ, यास्कः यास्कौ, वैदः वैदौ, आत्रेयः आत्रेयौ, भार्गवः भार्गवौ, कौत्सः कौत्सौ, आङ्गिरसः आङ्गिरसौ, वाशिष्ठः वाशिष्ठौ, गौतमः गौतमौ, आङ्गः आङ्गौ इत्यादि। एवं व्वे लुकि मे गर्गाणां धनं गर्गधनम् अङ्गधनमित्यादि। व्वे विहितानां त्यानामिति किम्? गार्ग्यश्च वात्स्यश्च आग्निवेश्यश्च ते गार्ग्यवात्स्याग्निवेश्याः। एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात्। परैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमासार्थवाक्ये समासे एकार्थाभावात् बहुभावविवक्षायां बहुत्वं लुगित्याहुः। तेन गर्गवत्साग्निवेशा इति उदाजह्रुः, प्रियवाङ्गा इति प्रत्युदाजह्रुरिति। गर्गविदादौ उक्तौ।

यस्कादिर्यथा—

यस्को लह्य-तक्षाऽयस्थूण-भलन्दन-तृणकर्णाः (१) ।
भण्डित भड़ित-खरपा भण्डिल-भड़िलौ सदामत्तः ।
क्रोष्टुमायो बहिर्योगः कम्बलहार कर्पकौ ।
क्रोष्टुमानौ त्रिपपुटोपरिमेखल-पादकाः (२) ।
कर्णाटकः क्रोष्टुपादस्तथा कटुकमन्थकौ (३) ।
एकसक्थः शीर्षमायः पिण्डीजङ्घस्तथैव च ।
जङ्घारथ-शीर्षमाथ-लङ्का रक्षोऽसुरस्तथा ।
उरकाशोऽजवस्तिश्च त्रिशिः कुद्रिरिमे त्रयः ॥

यस्कादयः षट् शिवादयः, भण्डितादयः पञ्च नड़ादयः, अजवस्त्यादयस्त्रयः अत्रादयः । शेषाणामदन्तत्वात् ष्णिः । यस्कादेराकृतिगणत्वात् पुष्करसच्छब्दोऽपि, तेन पौष्करसादिः पौष्करसादी, त्वे पुष्करसदः ।

बह्वचो गोत्रस्य प्राच्यभरतेषु । बह्वचः शब्दात् प्राच्य-भरत-गोत्रविहितस्य त्यस्य लुक् स्यात् त्वे । प्राच्यगोत्रे—पन्नागारस्यापत्यं पान्नागारिः पान्नागारी, त्वे पन्नागाराः । भरतगोत्रे—यौधिष्ठिरिः यौधिष्ठिरी युधिष्ठिराः । एवमार्ज्जुनिः आर्ज्जुनी अर्ज्जुनाः । बह्वच इति किम् ? भैमिः भैमी भैमयः ।

अगस्त्यकुण्डिन्योरगस्तिकुण्डिनौ च । आभ्यां गोत्रत्यस्य त्वे

(१) लह्य इत्यत्र लक्ष इति च पाठान्तरम् ।

(२) त्रिपुट, उपरिमेखल । पादक इत्यत्र पदक इत्यपि पाठः ।

(३) कटुक इत्यत्र वटुक इत्यपि पाठ ।

लुक् स्यात्, लुकि सति अगस्त्य कुण्डिन्योरगस्तिकुण्डिनावादेशौ क्रमात् स्तः। अगस्त्यस्यान्तरापत्यम् ऋषि-ष्ण आगस्त्यः, आगस्त्यौ व्वे अगस्तयः। कुण्डिन्या अपत्यं गर्गादित्वात् ष्यः कौण्डिन्यः कौण्डिन्यौ व्वे कुण्डिनाः।

तिककितवादेर्ये। तिकादेः कितवादेश्च परस्य गोत्रविहितस्य त्यस्य ये लुक् स्यात् व्वे। तैकायनयश्च कैतवायनयश्च ते तिककितवाः। उपकलमकाः उजवाकुभाः उरसलङ्कटाः अग्निवेशदासेरकाः बह्वरभण्डीरथाः पफकनरकाः वकनखगुदपरिणद्धाः लङ्कशान्तमुखाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः इत्यादि। ये किं? तैकायनयः कैतवायनयः। व्वे किं? तैकायनिश्च कैतवायनिश्च तैकायनिकैतवायनी।

उपकादिभ्यो वाऽये च। उपकादिभ्यो व्वे विहितस्य गोत्रत्यस्य अये ये च व्वे लुक् स्याद्वा। उपकाः औपकायनाः, लमकाः लामकायनाः। उपकलमकाः औपकायनलामकायनाः। व्वे किम्? औपकायनश्च लामकायनौ च औपकायनलामकायनाः। उपकादिर्यथा—

उपक-लमक-सुपिष्ट-मयूर जटिलक वधिरक-ब्रष्णिक-कर्णम्।
पिष्ट-कपिष्ठल-खारीजङ्घाऽनुजक-शलाखल-कलसीकण्ठम्॥
कासकृत्स्नौ निदाघश्च मन्दकः कृष्णसुन्दरः।
कृष्णाजिनोऽथभारश्च भ्रष्टकः कृष्णपिङ्गलः॥
उन्मूक-दामकण्ठौ चाऽथटायक-कुपीतकौ।
अनुलोमाऽनभिहितः प्रतानोऽजपथस्तथा॥

उपकलमकौ नड़ादौ, सुपिष्टादयः सप्त शिवादयः, अनुलोमन् वाह्वादिः, शेषाणामदन्तत्वात् णिप्राप्तिः।

गर्गविदादयः कद्वयोः षे। गर्गादेर्विदादेश्च षे वर्त्तमानस्य कद्वयोर्विहितस्य त्यस्य लुक् स्याद्वा।

गार्ग्यस्य गार्ग्ययोर्वा धनं गर्गधनं गार्ग्यधनम्, एवं वैदस्य वैदयोर्वा धनं विदधनं वैदधनम्।

रूढ़ात् कम्बोजादेर्नित्यम्। कम्बोजादे रूढ़ात् उत्पन्नस्य राजापत्यार्थत्यस्य लुक् नित्यं स्यात्। कम्बोज जनपदस्यापत्यं राजा वा कम्बोजः।

कम्बोजादिर्यथा—

कम्बोजः केरलश्चोलः खशश्च यवनः शक इत्यादि।

स्त्रियां कुरुकुन्त्यवन्तिभ्यः। एभ्यो राजापत्योत्पन्नत्यस्य, स्त्रियां लुक् स्यात्। कुरोर्जनपदस्यापत्यं स्त्री राज्ञी वा कुरूः, उत इत्यादिना ऊप्। एवं कुन्ती अवन्ती, षाडो लुकि स्त्रजातेरिति इति ईप्।

अतश्चाप्राच्य भर्ग-यौधेयादेः। प्राच्यगोत्र-भर्गादि-यौधेयादि-भिन्नाद्राजापत्योत्पन्नस्य अतस्त्यस्य (१) स्त्रियां लुक् स्यात्। शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी, इड़विड़स्यापत्यं स्त्री राज्ञी वा इड़विड़ी इत्यत्र ट्रस्य, मद्रस्यापत्यं स्त्री राज्ञी वा मद्री, दरदोऽपत्यं स्त्री राज्ञी वा दरत् इत्यत्र ष्यचः ण्यस्य लुक्, लुकि ईप् मद्र-शूरसेनाभ्याम्। अत इति किं? कौशल्या आजाद्या। अप्राच्य-भर्ग-

(१) अकारवानप्रत्ययस्य।

यौधेयादेरिति किं ? पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौह्मी-त्यादि । भर्गादेः—भार्गी . कैकेयी । कथं "प्राक् केकयीतो भरतस्ततोऽभूत्" आद्यप्रकृतिरेव ? नदादिपाठादिति भागवृत्तिः ।

भर्गादिर्यथा—

भर्गः करूशः कश्मीरः कौरव्यः सुह्मकेकयौ ।
शाल्वोऽनुभवकश्चैव भर्गादिः परिकीर्त्तितः ॥

यौधेयादेः—यौधेयी शौभ्रेयीत्यादि । स्त्रियामिति चकारेणानुकर्षणात्र ब्यमत (१) ।

न गोपवनादेः । गोपवनादेर्गोत्रत्यस्य लुड् न स्यात् । अयं विदाद्यन्तर्गणः । गौपवनाः, गौपवनस्य गौपवनयोः कुलं गौपवनकुलमित्यादि ।

## उक्तोऽपत्याधिकारः ।

ष्णो वेत्त्यादौ यमादिभ्यस्त्वपत्यवत् । स्वार्थस्ताद्धेः ष्णः स्यात् वेत्त्यादिष्वर्थेषु, यमादिभ्यस्तु अपत्यवत् त्याः स्युः । वेत्त्यादिर्यथा—

वेत्ति । अधीते । रक्तम् । युक्तः कालः । दृष्टं साम । परिवृतो-रथः । उद्धृतम् । संस्कृतं भक्ष्यम् । अवगयिता । पौर्णमास्यस्मिन् । अस्य देवता । समूहः । विषयो देशोऽस्य । आदिरस्य प्रगाथे । संग्रामः । तदस्त्यस्मिन् देशे । निर्वृत्तः । निवासः । अदूरभवः । विकारः । अवयवः । भवः । व्याख्यानम् । प्रायभवः । जातः । कृतः । क्रीतः । लब्धः । कुशलः । वर्णं इत्युच्यते । संभूतः । साधुः । पुष्यात् ।

---

(१) अनुवर्त्तते इति शेषः ।

४३० । ढघे कात् षीककण्षीनेया श्चानितश्च।

( ढ घे ७।, कात् ५।, षीक कण् षीन इयाः १।।।, च ।१।, अनितः १।।।, च ।१। )।

कात् परा एते पूर्व्वे च सेतो ऽनितश्च स्युः ढे घे च वाच्ये।

---

पच्यमानम्। उप्तम्। देयमृणम्। सुगो व्याहरति। अस्य सोढ़म्। आगतः। प्रभवति। गच्छति। अभिनिष्क्रामति। अधिकृत्य कृतो ग्रन्थः। एकदिक्। अस्य निवासः। अस्याभिजनः। अस्य भक्तिः। दृश्यते। श्रूयते। उह्यते। प्रोक्तम्। उपज्ञातं। कृतो ग्रन्थः। इदम्।

यमादिस्तावत्—यमः आदित्यः अग्निः कलिः दितिः अदितिः पृथिवी देवः अपत्याद्यादिश्यानाम्नाः उत्सादयश्च। यम्रादिर्व्यक्तः कुर्व्यादौ। उदाहरणानि तत्र तत्र वक्ष्यामि।

दित्यदितिभ्यां न षीयः। आभ्यां वेत्त्यादौ षीयो न स्यात्। दितिं वेत्ति अधीते वा दैत्यः, एवं आदित्य इत्यादौ ण्यः, न दैतेय आदितेय इति।

४३० । ढघे। ढश्च घश्च तत्तस्मिन्। कं कारकम्। षीकश्च कण् च षीनश्च इयश्च ते। नास्ति इत् येषां ते। चकारेण पूर्व्वं-सप्त-त्या अनुकृष्यन्ते। तथाच भवत्यास्तवत्याश्च त्या एकादश सेतोऽनितश्चाभिधानाद्भविष्यन्तीत्यर्थः।

टादित्यधिक्रियते धात् प्राक्।

वेत्त्यधीते। टात् परः ण्यः स्यात् वेत्त्यधीते अर्थे। वैया-

तर्कं वेत्ति अधीते वा तार्किकः, पदकः, क्रमकः, वैयाकरणः; वाचा कृतं वाचिकं, पाणिनीयं; अक्षा युध्यते ऽसौ आक्षीकः, याष्टीकः, तिष्येण युक्ता रात्रिः तैषी, पौषी; क्षत्राय साधुः क्षत्रियः, यज्ञाय हितं यज्ञियं; मथुराया आगतः माथुरः; इह भवं ऐहिकं, कादाचित्कं, ग्रामीणः, ग्राम्यः, मूर्द्धन्यः, नादेयः शालीयः, नागरः, अग्रः ।

---

करण इति व्याङ् पूर्व्वात् कृधोरनट् णः अट्, व्याकरणं वेत्ति अधीते वा इत्यर्थे ण्णः णित्त्वे युम् त्रिः ययोरित्यकारलोपः । एवं प्रभाकरोपलक्षितो ग्रन्थः प्रभाकरस्तं वेत्ति अधीते वा प्राभाकर इत्यादि ।

ष्णिक उक्थादेः षष्टिशतपथाभ्यां त्वणित् । उक्थादेः ष्णिकः स्यात् षष्टिपथ-शतपथाभ्यान्तु णिकः । उपचारात् उक्थशब्द औक्थिकार्थः, तं वेत्ति अधीते वा औक्थिकः लौकायतिकः ।

उक्थादिर्यथा—

उक्थो लोकायतः श्रक्षः पुराणं संहिता शरत् ।
वर्षा वसन्तो हेमन्तः सङ्घातः संग्रहो गणः ॥
अथर्व्वा शिशिरो हस्तिशचीयज्ञेण-लक्षणम् ।
न्याय न्यासावनुपदानुगुणाक्षगुणा अपि ॥
द्विपदा त्रिपदा ज्योतिरायुर्व्वेदः क्रमेतरः ।
यज्ञ सखानुकल्पाय पुनरुक्तः पदःक्रमः ॥

चरमप्रथमाभ्यान्तु गुणोऽथ क्रतुवाचिनः ।
आख्यानाख्यायिके (१) चेतिहासो वै लक्षणोत्तराः ॥
अधर्माद्यादिविद्यान्ता अथ कल्पादिवर्ज्जिताः ।
सूत्रान्ताश्चाथ कल्पान्तास्तथास्मिन्ननुसूरपि ॥

अथर्व्वाणं वेत्त्यधीते वा आथर्व्वणिकः, इके ण नलोपः । नैयायिकः नैयासिकः, य्वोर्युम् इतीमि त्रिः । अनुकल्पशब्दं परे पठन्ति (२) । वस्तुतस्तु कल्पान्तत्वात् सिध्यति । चारमगुणिकः प्राथमगुणिकः । क्रतुवाचिनः क्रतुविशेषवाचिनः । आश्वमेधिकः वाजपेयिकः राजसूयिकः । आख्यानं ग्रन्थान्तर्गतापेक्षितस्य वर्णनम् । यवक्रीतमधिकृत्य कृतो ग्रन्थ इत्यर्थे ष्णो कृते कश्चित्तस्य लुक्, तं वेत्त्यधीते वा यावक्रीतिकः प्रैयङ्गविकः । मूले तार्किक इति (३) ।

आख्यायिका प्रबन्धविशेषः, तमधिकृत्य कृतो ग्रन्थः, तस्य लुक्, तं वेत्त्यधीते वा इत्यर्थे ष्णिकः । वासवदत्तिकः सौमनोत्तरिक इत्यादि । लक्षणोत्तरा इति—लक्षणशब्द उत्तरो येषां, गौलक्षणिक आश्वलक्षणिकः । अधर्माद्यादिविद्यान्ता इति—सार्पविद्यिकः वायसविद्यिकः । धर्मादादयस्तु धार्म्मविद्यः त्रैविद्यः आङ्गविद्यः । अथानन्तरं कल्पादिवर्ज्जिताः सूत्रान्ता इति—सांग्रहसूत्रिकः वार्त्तिकसूत्रिकः । कल्पादिस्तु काल्पसूत्रः । कल्पान्ता

(१) आख्यानविशेषवाचिनः, आख्यायिकाविशेषवाचिनश्च ।
(२) तन्मतानुसारेणैवास्माभिरपि न पठित इत्याशयः ।
(३) आख्यानोदाहरणमिति शेषः ।

इति—मातृकल्पिकः पाराशरकल्पिकः । अनुसूर्नाम ग्रन्थविशेषः, तं वेत्त्यधीते वा इत्यर्थे ष्णिकः ।

इसुसुक्तान्तादिकस्य कः । उक् प्रत्याहारः । इसन्तादुसन्तादुक्प्रत्याहारात् तान्ताच्च परस्य इकस्य कः स्यात् । आनुसुकः, ष्णिकस्येकस्य कत्वविधानात् ष्णित्वे ञ्रिः । षष्टिपथं वेत्त्यधीते वा षष्टिपथिकः षष्टिपथिकौ शतपथिकः शतपथिकौ ।

पदादेः कः । ढादित्येव । पदादेर्वेत्त्यधीते वार्थे कः स्यात् । मूले पदकः क्रमक इति । पदादिर्यथा—

पदं शिक्षा क्रमः साम मीमांसोपनिषच्च षट् ।

शिक्षकः मीमांसकः, केऽकः स्वः ।

पदोत्तरदादिकः । पदमुत्तरपदं यत्र तस्मात् इकः स्यात् वेत्त्यधीते वार्थे । पूर्व्वपदं वेत्त्यधीते वा पूर्व्वपदिक उत्तरपदिक इति । एकदेशिनस्तु पदोत्तरशब्दादेव इकः, पदोत्तरपदिक इत्याहुः । आनुपदिक इति उक्थादित्वात् ।

अनुब्राह्मणादिन् । उपनिषद्भागातिरिक्तवेदव्याख्यानं ब्राह्मणशब्देनोक्तं, तस्य सदृशम् अनुब्राह्मणं, सादृश्ये वसः, तद्वेत्त्यधीते वा अनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति । चान्द्रास्तु अस्त्यर्थेना साधयन्ति इति चिन्त्यम् ।

इयस्तु वाधीते छन्दसः श्रोत्रश्च । छन्दसोऽधीतेऽर्थे इयः स्यात् वा, तस्मिन् छन्दसः श्रोत्रादेशश्च । छन्दोऽधीते श्रोत्रियः पक्षे छान्दसः, त्वन्तस्य नानुवृत्तिः ।

सूत्रात् संख्याकोडो लुक् । सूत्रवाचिनः संख्याप्रकृतेः कोडी-

ऽध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनीयमष्टकं (१) सूत्रं वेत्त्यधीते वा अष्टकः पाणिनीयः, दशको वैयाघ्रपदीयः। संख्येति किं? महावार्त्तिकं सूत्रं वेत्त्यधीते वा माहावार्त्तिकः। कोड इति किं? चतुष्टयं सूत्रं वेत्त्यधीते वा चातुष्टयः।

सहसर्व्वपूर्व्वाच्च। सहपूर्व्वात् सर्व्वपूर्व्वाच्च लेः परस्याध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। सवार्त्तिकं वेत्त्यधीते वा सवार्त्तिकः ससंग्रहः, एवं सर्व्ववेदः सर्व्वशास्त्रः, पञ्च वेदान् वेत्त्यधीते वा तान्वि वाच्ये गः।

प्रोक्ताच्च। प्रोक्तविहितत्यान्तादध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनिना प्रोक्तं वेत्ति अधीते वा पाणिनीयः स्त्रियां पाणिनीया, आपिशलस्यापत्यं आपिशलिः, तेन प्रोक्तम् आपिशलं, तद्वेत्त्यधीते वा आपिशलः स्त्रियामापिशला, स्त्रियेऽपि गौणत्वान्नेप्।

कल्प-सूत्र-च्छन्दो ब्राह्मणानि तद्विषयाणि। एतानि प्रोक्ताधिकारत्यान्तानि अध्येतृवेदितृविषयाणि भवन्ति। अनन्यत्रभावो विषयार्थः। तथाच प्रोक्तत्यान्तानामध्येतृ-वेदितृ-विषयता-व्याप्य-विषयताकत्वमिति पर्य्यवसितार्थः (२)। एतेन स्वातन्त्र्यम् उपाध्यन्तरयोगे वाक्यस्य निवर्त्तते। कल्पस्य तावत्—काश्यपेन

(१) अष्टौ अध्यायाः परिमाणमस्येति अष्टकम्।

(२) छन्द प्रभृतिभ्यस्तदेव प्रोक्तार्थे प्रत्ययः स्यात् यदा प्रोक्तप्रत्ययान्तेभ्यः शब्देभ्यः परं वेत्त्यधीते वेत्यर्थे प्रत्ययस्तल्लोपश्च सम्भाव्यते। न तु कठेन प्रोक्तं कठमिति स्वातन्त्र्येण प्रयोगः स्यात्। तेन कठेन प्रोक्तं कठम्। कठं वेत्त्यधीते वा कठ इत्येवं वाक्यमपि न स्यात्। अतएवोक्तं कठेन प्रोक्तमधीते इति मुग्धबोधम्।

प्रोक्तं कल्पं (१) वेत्त्यधीते वा काश्यपी, कश्यपशब्दात् प्रोक्तार्थे णिन् (२) तस्मादध्येतृवेदित्रोः ष्णः, तस्य लुक्, लुकि सति अनेन प्रोक्तस्याध्येतृवेदितृविषयत्वे लिङ्गवचने (३) न भवतः। एवं कौशिकी। इह कल्पविषयस्य ग्रहणात् पैङ्गीकल्प इत्यादौ न स्यात्। सूत्रस्य तावत्—पाराशर्य्येण प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा पाराशरी भिक्षुः, कर्म्मन्दी भिक्षुः (४) शैलाली नटः, कृशाश्वी नटः (५)। छन्दसस्तावत्—कठो ब्राह्मणः, तेन प्रोक्तं छन्दो वेत्त्यधीते वा कठः, मोदः पैप्पलादः आर्चाभी वाजसनेयी। ब्राह्मणस्य तावत्—तण्डिना विप्रेण प्रोक्तं ब्राह्मणं (६) वेत्त्यधीते वा ताण्डी शाट्यायनी ऐतरेयी। एषामिति किम्? पाणिनीयं व्याकरणम्।

अगोत्रण्यि कण्वादिण्यान्तइहादीयो भवादौ। गोत्रविहितण्यान्तवर्ज्जितात् कण्वादिण्यान्तवर्ज्जिताच्च इहसंज्ञकादीयः स्यात् भवादिष्वर्थेषु। गार्गीयः वात्सीयः शालीयः ग्रैवीयः औपगवीयः त्वदीयः मदीयः अस्मदीय इत्यादि। गोत्रण्यि-कण्वादिण्याभ्यान्तु दाक्षः काण्वः जामदग्न्यः। गोत्रार्थे इति किम्? सुतङ्गमेन

(१) यागक्रियोपदेशको वेदाङ्गग्रन्थविशेषःकल्पः।

(२) णिनुविधायकसूत्रं परत्र वक्ष्यति।

(३) लिङ्गवचने इति प्रोक्तस्येत्यनेनान्वयः।

(४) कर्म्मन्देन प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वेति। भिक्षु- परिव्राट् कर्म्मन्दी त्यमरः।

(५) कृशाश्वीत्यत्र वक्ष्यमाणसूत्रेण इनु।

(६) मन्त्रेतरवेदभागो ब्राह्मणम्।

निर्वृत्तः सौतङ्गमः, तस्येदं सौतङ्गमीयम्। ण्य इति किम्? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम्।

द्व्यचः प्राच्यभरतात्र्च। प्राच्यगोत्रण्यान्तात् भरतगोत्रण्यान्ताच्च द्व्यच ईयः स्यात् भवादौ। पूर्व्वेणाप्राप्तेऽनेन विधीयते। पौष्पीय वैङ्गीयः काशीयः। द्व्यच इति किम्? पान्नागारः। प्राच्यभरतादिति किम्? दाक्षः प्राचः। ननु कथं काशीय इत्युदाहृतं, काश्यादेर्णिकण्णिकयोर्विधानादिति चेन्न, तत्र चेदिशब्द-समभिव्याहृत देशवाचक-काशीशब्दग्रहणात्। इह गोत्रार्थस्य ग्रहणं, न तु देशवाचकस्येति।

कखोडो देशे। द्व्यादित्येव। ककारोडः खकारोडश्च देशे वर्त्तमानाद्व्यादीयः स्यात् भवादौ। कोडन्तस्य वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधनार्थमिदम्। आवज्जनकीयं द्रौघनकीयम् आश्वत्थकीयं कौटशिखीयम् आर्योसुखीयम्। द्व्यादिति किम्? सौसुखम्।

ग्राम-कन्या-ह्रद-पलद-नगरोत्तरदात्। ग्रामाद्युत्तरदाद्देशवाचकात् द्व्यादीयः स्यात् भवादौ। दाक्षिग्रामीयं दाक्षिकन्यीयं दाक्षिह्रदीयं दाक्षिपलदीय दाक्षिनगरीयं माहकिग्रामीयमित्यादि। द्व्यादिति किम्? महनगरे भवः माहनगरः। उत्तरदादिति-किम्? वाहुग्रामं वाहुनगरम्। वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधकमिदम्।

पर्णकृकणाद्भारद्वाजे। द्व्यादिति निवृत्तम्। भारद्वाजे नाम्नि देशे वर्त्तमानाभ्यां पर्णकृकणाभ्याम् ईयः स्यात् भवादौ। पर्णीयं कृकणीयम्। भारद्वाजदेशभिन्ने तु पार्णं कार्कणम्।

गहादेर्भवतश्च दङ् च। गहादेरीयः स्यात् भवादौ, भवच्छब्दस्य ईये दङ् च, ङ इत्। गहीयम् अन्तरीयम्।

गहादिर्यथा—

गहान्तरौ नेमि समानशाखौ दत्तास-काठेरणि-धन्विनश्च।
आहिंसि-नाठेरणि-पूर्व्वपक्षा भौरिः समः शैशिरिरुत्तरश्च॥
उत्तमो विषमो भौजिरन्तस्थो मगधासुरौ।
इषुप्रापरपक्षाङ्गाधमशाखा तथा भवेत् (१)॥
शौङ्गिरुत्तमशाखश्च व्याडि-व्याड़ायनौ तथा।
इत्यनीकोऽग्निशर्म्मा च शौङ्गि-वाराटकौ तथा॥
एकद्रुच्च वाल्मीकिरवस्यन्दन पार्श्वतः (२)।
एकग्रामो देवशर्म्मिः कामप्रस्थस्तथैकतः।
आमिषेरकपल्लाशौ (३) च मुखतः चौमश्रुतिश्च च॥

येऽत्र वृद्धास्तेभ्य औत्सर्गिकः ष्णी, येऽवृद्धास्तेभ्यो जनपदत्वात् ष्णको, ये तु ष्णान्तास्तेभ्यो ह्यभिधप्राच्यभरतात् ष्णी बाध्यते। पार्श्वतीयः, ष्यटेर्लोप इति टिलोपः। कामप्रस्थशब्दात् प्रस्थान्तत्वात् ष्णके प्राप्ते विधानम्। पूर्व्ववदेकतीय इति चान्द्राः। आकृतिगणोऽयम्। भवच्छब्दस्यास्य दङ् भवदीयः।

पर्व्वताद्वा त्वऽमनुष्ये। पर्व्वतशब्दादमनुष्ये वाच्ये ईयः स्यात् भवादौ, मनुष्याभिधे तु वा। पर्व्वतीयो मनुष्यो राजा वा, पर्व्वतीयं पार्व्वतमुदकम्।

---

(१) इषुग, अपरपक्ष, अङ्ग अधमशाख।
(२) पार्श्वतस्।
(३) आमिषि एकपलाश।

गर्त्तोत्तरदाद्देशे । देशवाचकाद्गर्त्तोत्तरदादीयः स्यात् भवादौ । वृकगर्त्तीयः । उत्तरादिति किम् ? वाहुगर्त्तम् । वाहीकग्रामेभ्यश्चेति णिकणियोर्बाधनार्थम् ।

प्राचि तु कटादेः । प्राग्देशवाचिनः कटपूर्व्वादीयः स्यात् भवादौ । कटनगरीयम् । कटघोषीयम् । प्राग्देश इति किम् ? काटनगरः ।

स्व-पर-देव-राज-जनस्य कंच । एभ्य ईयः स्यात्, एषां कन् च । स्वकीयः (१) परकीयः देवकीयः राजकीयः जनकीयः । आगमशासनमनित्यमिति न्यायात् स्वीयं देवीयमित्याद्यपि । तथाच धनमहरद्धदत्तं स्वीयमिति शिष्टप्रयोगः । वामनधर्म्मदासौ तु स्वस्य इदं सौवमित्याहतुः ।

पृथिवीमध्याच्च मध्यमच । पृथिवीमध्यशब्दात् ईयः स्यात्, तस्मिन्मध्यमादेशश्च । मध्यमीयः ।

वेणुकादेर्णित् । वेणुकादेरीयो णित् स्यात् भवादौ । वैणुकीयम् । वेणुकादिर्यथा—

वेणुक चित्रकमुत्तरपदकं मध्यमपदकः प्रस्थकमन्यत् ।

अन्यदित्यनेन शारदीयम् । वेणुकादिपक्षानां कोङ्त्वात् ण्ये प्राप्ते पाठः । आकृतिगणोऽयम् ।

---

(१) धनमहरद्धदत्तं स्वीयमित्यसाधुरिति पशुपतिरिति संक्षिप्तसारे (१२८सू) द्वारादीनाञ्चेत्यत्र वामनेन धर्म्मदासेन च स्वस्येदं सौवमित्युदाहृतम्, अस्माभिरपि स्वेरित्यत्र । तस्मात् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति वक्तव्यम् । इति गोयीचन्द्रः ।

काश्यादेर्णिकणिकौ। काश्यादेः परौ णिकणिकौ स्यातां भवादौ। काशिका काशिकी चैदिका चैदिकी। काश्यादिर्यथा।

काशिस-चेदच्युत-मोदमानाः
संवाह-गोवासन-साधुमित्रम्।
सुरङ्ग-सम्मालुपराज पूर्व्वे-
कालोऽकाला अपि सिन्धुमित्रः।
शकुलादी हस्तिकर्षूः कुनामा करणेन च।
आपत्काल-हिरण्याभ्यां दासमित्रेण संयुतः॥
दासग्रामो देवदत्तो युवराजयुतस्तथा।
सर्व्वधर्मा देवराजो व्यासोऽरिन्दम एव च॥
सौधावतान इत्यष्टाविंशतिः समुदीरिताः।

काशिचेदिभ्यां जनपदत्वात् षकः, सम्मातिशब्दात् त्वभिन्नप्रायभरतगोत्रयग्रन्तात् ण्यो, येऽत्र वृद्धास्तेभ्यः ईयो, येऽवृद्धास्तेभ्यः ण्यो, हस्तिकर्षूशब्दाद्देशवाचकादुदन्तात् ण्णिकश्च बाध्यते। देवदत्तशब्दोऽत्र प्राग्देशवाचकः, तस्माद्वृद्धसंज्ञकत्वादीये प्राप्ते विधानम्। वाहीकग्रामवाचकात्तु (१) देवदत्तः।

वृद्धाद्वाहीकग्रामाद्वा तृशीनरग्रामात्। वाहीकग्रामवाचकात् वृद्धात् णिकण्णिकौ स्यातां भवादौ। शाकलिका शाकलिकी मान्यविका मान्यविकी। अवृद्धात्तु माहनगरम्। उशीनरग्रामवाचकात्तु आह्वजालिका आह्वजालिकी सौदर्शनिका सौदर्शनिकी, पक्षे आह्वजालीया सौदर्शनीया।

---

(१) वाहीकदेशीयग्रामवाचकात्।

देशे युड्मरुवचनाभ्यां णकोऽञ्याञः। हृद्धाद्युडो देशवाचकाद्वृद्धान्मरुवाचकाच्च णकः स्यात् भवादौ न तु ञ्याञः (१)। सांकाश्यकः काम्पिल्यकः मागधकः। धन्वन्शब्दो मरुवाची, पारेमध्ये इत्यादिना व सः, अन इत्यनेनास्य. (२) पारेधन्वे जातः पारेधन्वकः, ऐरावते जातः ऐरावतकः। ञ्याञस्तु सुप्रस्थस्य इदं सौप्रस्थ्यं सौप्रस्थ्यदेशे भवः सौप्रस्थीयः, ञ्याञो यकारः शकारस्थानीयः, तस्यासिद्धत्वमिति पाणिनीयाः।

वहप्रस्थपुरान्ताच्च। वहान्तात् प्रस्थान्तात् पुरान्ताच्च देशवाचिनो हृद्धात् णकः स्याद्भवादौ। पैलुवहकः फाल्गुनीवहकः, मालाप्रस्थकः, नान्दीपुरकः। रुड्त्वात् परसूत्रेण सिद्धे पुरग्रहणं प्राच्यार्थं, तथाहि नान्दीपुरमुदीच्याम्। हृद्धादिति किं ? ग्रैवपुरः।

प्राचि त्वी रुङः। प्राचीति देशविशेषणम्। ईकारान्ताद्रेफोङश्च प्राग्देशवाचकात् हृद्धात् णकः स्याद्भवादौ। माकन्दी—माकन्दकः, काकन्दी—काकन्दकः। पाटलिपुत्रकः ऐकचक्रकः, एकचक्रशब्दस्य प्राग्देशे एङादित्वात् हृद्धसंज्ञा। हृद्धादिति किं ? दशपुरे जातः दाशपुरः। प्राचीति किं ? दात्तामित्रीयः सौवीरनगरीयः। दात्तामित्री सौवीरनगरी, एते उदीच्यदेशस्थे।

जनपद-तदवधिभ्याम्। हृद्धाद्देशवाचिनो जनपदात् जनपदा-

---

(१) ञ्याधातमाश्रित्य कारोऽत्र भट्टाचेष्टम्।
(२) समासान्त स्यान्यस्य इत्यर्थः।

वधेश्च (१) णकः स्याद्वादौ। आभिसारकः, अप्राप्यत्वात् पूर्व्वेणा-प्राप्तेऽनेन णकः। आदर्शकः। जनपदावधेस्तावत् औपुष्ठकः श्यामायनकः। ननु जनपदावधिर्जनपद एव न ग्रामः, किमर्थं तर्हि पृथग् ग्रहणमिति चेत् सत्यं, तदवधिग्रहणं बाधकबाधनार्थं, तेन चैगर्त्तकः इत्यत्र गर्त्तोत्तरदादित्तीय बाधित्वा जनपदा-वधेर्णक एव स्यादिति वामनः।

व्वविषयादद्व्वाच। अद्व्वात् द्व्वाच जनपदवाचिनस्तदवधि-वाचिनश्च व्वविषयात् णकः स्याद्वादौ। णेययोरपवादः। अद्व्वाज्जनपदात्तावत्—अङ्गाः आङ्गकः (२)। अद्व्वाज्जनपदा-वधेस्तावत्—अजमीढ़ाः आजमीढ़कः, अजक्रन्दाः आजक्रन्दकः। द्व्वाज्जनपदात्तावत्—दार्व्वाः दार्व्वकः। द्व्वाज्जनपदावधेस्ता-वत्—कालञ्जराः कालञ्जरकः। विषयग्रहणमनन्यत्रभावार्थं (३) तेन जनपदैकशेषबहुत्वे मा भूत्। तेन वर्त्तनी च वर्त्तनी च वर्त्तनी च ता वर्त्तन्यः, वार्त्तनः (४)। ननु द्व्वात् पूर्व्वेणैव णके सिद्धे किमर्थं चकारेण तदनुकर्षणमिति ? उच्यते—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इति न्यायात् व्वविषयात् द्व्वाद्बाधा विधेयेत्यदोषः (५)।

---

(१) जनपदश्चासौ अवधिश्चेति कर्म्मधारयाज्जनपदस्य एवावधिर्लभ्यत— इति तत्त्वबोधिनी।

(२) अङ्गा जनपदास्तेषु भव आङ्गकः।

(३) यः शब्दो नित्यबहुवचनान्तस्तस्यैवाय विधिरिति भाव।

(४) वर्त्तनीषु भवो वार्त्तनः।

(५) अयमेव तक्रकौण्डिन्यन्याय इत्युच्यते—पूर्व्वसूत्रे हि जनपदसामान्ये

वर्त्तोऽग्नि कच्छ वल्लोत्तरदात्। वर्त्ताद्युत्तरदात् देशवाचकात् वृद्धादवृद्धाच्च ञकः स्यादृभवादौ। ञ्योययोरपवादः। चक्राणि वर्त्तन्तेऽत्र चक्रवर्त्तः वृतुङ् वर्त्तने डे घञ् तस्माच्चाक्रवर्त्तकः। एवं कालाग्नकः चारुकाच्छकः ऐन्द्रवल्लकः। वर्त्ताग्निकच्छवल्लान्तादिति कृते सिद्धे उत्तरदग्रहणं बहुत्यपूर्व्वादप्राप्त्यर्थं, तेन बाहुवर्त्तः। कथं बाहुवर्त्तकः इति? उच्यते—बहवो वर्त्तन्तेऽत्र इति व्युत्पत्त्या बाहुवर्त्तकः।

धूमादेः। धूमादेर्देशवाचकाञ्ञकः स्याद्भवादौ। धौमकः घौपस्थलकः। धूमादिर्यथा—

धूमो घोपस्थली घोपपुष्यो दाण्डायनस्थली।
धार्त्तराष्ट्री सुराष्ट्री च तीर्थ-पल्ली शशादनाः (१)।
प्रस्ताभिता राजगृह भचालीवर्ब्बरावयौ (२)॥
शस्यायो माठरो मद्रकुलोऽञ्जीकुलगर्द्दभौ (३)।
आर्ज्जुनायन-साकेत-षण्डण्ड-दक्षिणापथाः॥
द्वीपाऽन्तरीपोज्जयिनी-द्वाहाराऽरुण-कुक्षयः।
एकत्रिंशदिमे प्रोक्ता स्वाहारश्च महास्थली॥

---

वृद्धात् ञको विहितः, यथा आभ्रपथाभ्राम्ये दाधिदानम्, इह तु बहुवचन-विषये विशेषे अवृद्धात् ञक, यथा कौशिक्ये तक्रदानम्। ततश्च बहुवचनादपि वृद्धात् ञके प्राप्ते आरभ्यमाणः अवृद्धात् ञक वृद्धात् ञकश्च बाधकः स्यादिति चकारेण समुच्चीयते इत्यर्थः इति पदमञ्जरी।

(१) पल्लीत्यत्र पल्ली इत्यपि पाठः।

(२) वर्ब्बर, व्याशय।

(३) अञ्जीकूल आञ्जीकूल आजीकूल इति पाठत्रयम्।

